खण्डन निरसनम् by श्रीचन्द्रधर भट्टाचार्य - Edited by Sri चारुचन्द्र चतुर्धुरीण. Published by वीरेन्द्रनाथ गोस्वामी at काशी प्रेस. Benares, 1967 Vikram era.

(10)

सारस्वत श्रीमान् द्वारिकानाथस्येदम् मोहल्लोपाल

ओम्।

# खण्डननिरसनम्

सांख्यवेदान्तादि-दर्शनशास्त्राध्यापकेन

श्रीचन्द्रधरभट्टाचार्य्येण

विरचितम्।

सेरजुरान्यतमभूस्वामिना

श्रीयुक्तचारुचन्द्रचतुर्धुरीणेन

वाराणस्यां

काशीयन्त्रालयतः प्रकाशितम्।

श्रीवीरेन्द्रनाथगोस्वामिना मुद्रितश्च

सम्वत् १९६७।

# उत्सर्गपत्रम् ।

आशोद्भासि-यशः-प्रभामलिनीकृतचारु-चन्द्रमण्डल महाराज वर्णाश्रमधर्म्मसंरक्षक द्विजराज काशिराज श्री१०८ मत् प्रभुनारायण सिंहशर्म G. C. I. E.

महोदय

परमोदार चरितेषु—

श्रीमन्महाराज !

ब्रह्मास्वाद-विभावनासमुदित-ध्येयैकताप्रत्यय-
द्वैतध्वान्त-विमर्द्दन-प्रविलसच्चिन्मात्रसान्द्रद्युते !
नानाखण्डनतत् परं श्रुतिगिरां याथार्थ्यविज्ञापकं
सन्न्यस्तं भवतः कराम्बुरुहयो रेतन्मया यत्नतः ॥

विनयावनत—

श्रीचन्द्रधरभट्टाचार्य्यस्य ।



ओम्

# विज्ञापनम् ।

अयि भो भव्याभव्यविचारचतुरा विद्वांसो ! नूनं भवद्भिरवगतमेव कदा प्रभृत्यार्य्यावर्त्तो ज्ञानगरिम्णा भुवनेषु ख्यातिमापन्नः पुरातनतया सर्व्वभूभागानां शिरःसु स्थितिमलभत, विज्ञातमेव चांसस्तते स्त्रय्येवाद्वितीयब्रह्मप्रतिपादनपरा मनुजनिकायानां चेतःसु परमगम्भीरस्येश्वरस्य श्रवणमननिदिध्यासनानिविदधाना समुज्ज्वलन्ती प्रदीपप्रभेव सर्व्वतः पदार्थान् स्वतः समुद्भासयन्ती विपश्चित्संसत्सु वर्त्तमाना विराजत इति । सैव चेदानींकेनचिन् नैयायिकधुरन्धरेण विपरीतार्थं व्याकुर्वता, विकल्पनेन स्वरसवाहिनीमापि पदपदार्थसङ्गतिं व्याधुन्वताऽभव्यवादैर्व्याख्यातॄन् पूर्व्वाचार्य्यान् निन्दता नितरामाकुलीकृतेव प्रतिभाति । तस्यैव तार्किकवरेण्यकृतग्रन्थस्य निराकरणात्मको निखिलतन्त्रस्वतन्त्रेण महामहोपाध्यायेन श्रीमता सुब्रह्मण्यशास्त्रिमहोदयेन, श्रीमदुपाध्यायेन काशिराजसंसद्विदुषा सुप्रसिद्धदार्शनिकप्रवरेण प्रियनाथतत्त्वरत्नभट्टाचार्य्यमहाशयेन, वाराणसीराजकीय संस्कृतपाठशाला न्यायादिदर्शनशास्त्राध्यापकेन प्रथितयशसा मदग्रजरूपेण श्रीयुक्तवामाचरणन्यायवैशेषिकाचार्य्यभट्टाचार्य्यमहाशयेन, कलिकाताराजकीय संस्कृतविद्यामन्दिर वेदान्तशास्त्राध्यापकेन सुगृहीतनामधेयेन परममित्रवरेण श्रीयुक्त लक्ष्मणशास्त्रिमहोदयेन च दृष्टश्चानुमतश्चायं मे प्रबन्धोऽद्य क्षुद्रपुस्तकाकारेण परिणतः श्रीमत्सु समुपस्थितः । तद्यदि भवन्तोऽसंस्तुतजनस्य कृतिरित्यनवज्ञाय कृपाकटाक्षपाते-



न पुस्तकमिदं पश्येयु स्तदा सफलो मे श्रमोयत्नश्च स्यादिति।

दुर्निवारव्याधिसमधिगतदौर्मनस्येनैव मया प्रबन्धोऽयं सर्वेषां बोधसौकर्य्यायसरलभाषायालिखितस्तदत्र दोषाणा मसद्भावो न सम्भवति, विद्वद्भिस्तु निजगुणैरेव सर्व्वं विचार्य्याहं क्षन्तव्यः।

अपिच यस्य महानुभावस्यानुभावेन प्रबन्धोऽयमात्मप्रकाशने समर्थः सञ्जातः, यस्य चानुग्रहादद्य क्षोदीयानपि मे ग्रन्थोऽयं सर्व्वविदुषां नयनविषयतामापन्नः, सोऽयं महात्मा सेरपुरान्यतमभूस्वामिनो गीर्व्वाणाङ्गलपारासिकप्रभृतिबहुभाषाभिज्ञस्य पण्डितप्रियस्य दिवं यातस्य हरचन्द्रचतुर्धुरीण महाशयस्याङ्कजन्माऽद्वैतवादश्रद्धालुः श्रीमद्भगवत्पादारविन्दमधुव्रतः श्रीयुक्तचारुचन्द्रचतुर्धुरीण महाशय आजन्मन एवानुजमिव मामकृत्रिमस्नेहभरेण स्निह्यति परिजन मिव च पालयति। अत एतदर्थं तस्मिन् कृतज्ञताप्रकाशोऽपि मे धृष्टतायै पर्य्यवसितः स्यादित्येतावन्मात्र मुक्त्वैव विरतवचनोऽस्मि यदाशरीरान्तरसंस्थतेः कनीयानग्रजन्मानामिव तं सर्व्वथाऽनुवर्त्तिष्य इति। किञ्च—

शीतैः स्वच्छैःशिखरनिकरै र्भिन्नपाथोदपंक्तिः<br>
शैलेशोऽसौ धृतपशुपती राजते गौरगात्रः।<br>
इत्यालोक्य प्रतिदिनमहो प्रार्थ्यते किन्तु कैश्चिद्<br>
बल्मीकानां प्रतनुमहसां यान्तु वेश्मानि लीनं? इति॥

वाराणसी—<br>
८३, खालिस पुरा<br>
श्रावणे, १३१७ वंगाब्दाः

विनीत—<br>
श्रीचन्द्रधरभट्टाचार्य्यस्य।



# खण्डनानिरसनम् ।

विश्वं यस्य कृपानिधेर्भगवतो माहात्म्यमत्युच्चकै
श्चित्रैर्भूजलताप्रसूनविटपैः सम्भाषते सर्व्वतः ।
वाता वह्निरवीन्दुमृत्युनिचया यत्प्रेरणाप्रेरणाः
तं नौमि स्थिरवृत्तिचित्तसुलभं देवं परं पूरुषम् ॥

वेदान्तानां वचननिचयै रद्वयब्रह्मबोधै
र्दोषज्ञानां विततवचसां तर्कजालानि भिन्दन् ।
पादाम्भोजप्रसररजसा यः पुनातिस्म विश्वं
कारुण्यानां जलधिमपि तं शङ्करञ्चानतोऽस्मि ॥

अद्वैतामृतपानमत्तमनुजा नानाम्बुसेवाच्युताः
क्लेशाम्भोनिधितीर्णशान्तमनसः सत्यं पदं प्राययुः ।
यः कश्चित् कुमतिप्रभेदवचसा द्वैतं समालम्बते
तस्योद्वेगचयाग्नितीव्रमहसां तापः कथं शाम्यतु ॥

वाचो मदीया अपि दोषदुष्टाः पुनन्तु वेदार्थसमर्थनेन ।
आपः प्रणाल्याः परिपातशुद्धा गङ्गाप्रवाहेषु पवित्रयन्ति ॥

न श्रुतं केन पूज्यपादस्य महामहोपाध्यायपदभाजः श्रीमतो राखालदासन्यायरत्नमहाशयस्य नाम, न ज्ञातं केनास्य विश्वविजयि पाण्डित्यं,नाभ्यर्हिता वा केनास्य सर्व्वतोगामिन प्रतिभा, कस्य वा न श्रुतिविषयता मुपैत्यस्य विशुद्धं ब्राह्मण्यं! असौ खलु सुधिया मग्रणीः परमेण महसाऽद्वितीयेनेव वर्च्चसा ज्वलद्धुताशन इव सर्व्वविदुषां शिरःसु वर्त्तमान आस्ते। रुचिराकृतितयापरमूर्त्तिरिव भगवतः कामविजयिनो विश्ववरेण्यः प्रतिभाति। सोऽयं प्रथमः सुमेधसामिदानीमाचार्य पदवीं समधिजिगमिषुः प्रतिपिपादयिषुर्वात्मनो विश्वविश्रुतां प्रतिभां वर्त्तमानोऽपि पश्चिमे वयसि लौकिकीं कतिपययुक्तिमवलम्ब्य परमपूज्यपादानां भगवता माचार्य्यपदभाजां श्रीमच्छंकरपादानां साक्षात् शङ्कराणामतिप्रियं विद्वद्‌गम्यमद्वैतवादं प्रतिक्षिपन् ग्रन्थमेकं निर्म्मितवान्।

आसीदियमेकदा भारतभूमि वौद्धानां तथा चार्वाकाणां कुतर्कजालै राच्छन्ना, आसीच्च सर्वत्र मुण्डनमण्डनानां दिगम्बराणां प्राश्रितचेलाञ्चलानाञ्चाभूतपूर्व्वःस्वापेप्यननुभूतपूर्व्वः प्रसारः। प्रतिबभौ च सर्वत्रार्य्यावर्त्तेषु निर्व्वाणोन्मुखस्य प्रदीपस्येवार्य्यधर्म्मस्य क्षीणा प्रभा! जनाश्च तदानीन्तनाः नास्तिकवादविजृम्भिता अपारयन्त आत्मानात्मनो विवेकेन सत्प्रतिपत्तुं, बौद्धधर्म्मेष्वेवास्थां कृतवन्तः क्रमेण प्रायः सर्व्व एवात्मानं वौद्धधर्म्मै रेव दीक्षितं चक्रुः। किं बहुना लुप्तप्राय इवासीत् नः सनातनोधर्म्मः, नष्टप्रायमिवासीत् न आर्य्यनाम, कीदृगवस्थानं वा तदानी मासीदार्य्यसंसदो यस्य

स्मर्तुमपि वेपते हृदयं, लेखन्यपि तदवस्थां वर्णयितुं विचलति, गार्वाणवाणी चापि लज्जते भाषया तद् भाषितुं, अन्यैरिवासुरै र्बौद्धदेहधारिभि रुपप्लुतमिदं सर्व्वं जगदासीदिति मन्यामहे।

ईदृशे च महति विषमे समये भगवान् आचार्य्यपादः आविर्भूय स्वीकृत्य च मानुष्यशरीरधारणं स्वजन्मना भारतभुवमिमां पवित्रयामास, प्रकाश्य च वेदवचसां यथार्थतात्पर्य्यं, युक्तितर्कदिग्धैः स्ववचोभि र्निराकृतवान् बौद्धादिनास्तिकवादान् संस्थापयामास च भगवतीनां श्रुतीनां प्रामाण्यं, अकरोच्च मन्दीभूतं निःश्रेयसप्रतिपक्षिणं वेदविरोधिबौद्धधर्म्मप्रभावम्। ततःप्रभृति पुनरेवार्य्यावर्त्ते निर्भर्त्सयन्निवान्यधर्म्मान्, तर्जयन्निव विरोधिनः, दूरीकुर्व्वन्निवाज्ञानान्धतमसं, समुद्घोषयन्निवात्मगौरव मार्य्यानुष्ठितकर्म्मकाण्डैरद्यापि सुतरां ज्वलति युगान्तवह्निरिवार्य्यधर्म्मः। यत् प्रभावादद्यापि पाश्चात्याः केचन परित्यज्यात्मधर्म्मं सनातनधर्म्मेष्वेव परामास्थां प्रदर्शयन्ति। किमुच्यते पाश्चात्यरमण्योऽपीहैव काश्चिदस्मद्धर्म्मेषु स्थिताः प्रतिदिनं पूजयन्ति शशिशेखरं, पठन्ति च श्रीमद्भगवन्माहात्म्यमिति नः प्रत्यक्षमेव। तद्यदि रजोरञ्जितांगः कश्चित् कृषीवल स्तादृशं महात्मानं वर्णाश्रमधर्म्मसंरक्षकं भगवन्तं शङ्करं स्वमतिप्रभवैर्वाग्जालैराक्षिपति निन्दाति वा परमसूक्ष्मबुद्धिग्राह्यमद्वैतवादं, स चोन्मत्त इवोपेक्ष्येत प्रज्ञावद्भिः। न्यायरत्नमहाशयस्तु नैयायिककुलभूषणः,

विद्वत्त्वञ्चास्य सुप्रसिद्ध मेव, सचासाधुभाषयाचार्य्यपाद-माक्षिपन्, निन्द्यवचोभिरद्वैतवादं दूषयन् कथमुपेक्ष्यः कथं वा सह्यो विवेकिभिः? तस्मिन् परमकारुणिके भगवति शङ्करे तर्कशास्त्रपक्षपातिना न्यायरत्न महाशयेन प्रयुक्त मभव्यवाद-मालोचयतां नो हृदयमर्मस्थानानि भिद्यन्ते, पीड्यन्ते च चेतांसि प्रवहन्ति च शोणितविन्दवो धमनीमार्गेण? कस्य वा हृदयं न दुनोति गुरुनिन्दातः? अपिच यस्य स्तुतिमन्तरा निन्दा नास्त्येव, मण्डनं विहाय खण्डनं दूरापेतमेव यस्य, तत्रै-वापभाषां प्रयुञ्जन् आत्मनो माहात्म्य मेव मलिनीकरोतीत्र लोकः। किञ्च, आचार्य्योद्भावितांद्वैतवादो दृढतरमूलतया-स्मिन् भारते अथवालं केवलेन भारतेन अपितु सर्व्वत्रैव जगति महाचल इव यावत्पञ्चसहस्रवत्सरान् दृढादपि दृढतरां स्थितिमलभत कृतवसतिश्च भारतीयानां हृदय-कन्दरे, स्वीकृतश्च सर्व्वैरेव मनीषिभिः सादरं, दीक्षितश्चात्मा अद्वैतपरब्रह्मणा विद्वद्भिः, पवित्रीकृतानि च चेतांस्यद्वैत-वस्तुमननादिना महात्मभिः। श्रुतिस्मृतीतिहासपुराणा-दयोऽपि काममुच्चैस्तरा मद्वैवादमेव गायन्ति, अद्वितीये ब्रह्मण्येव तेषां तात्पर्य्यं। तं किं कश्चित् स्वस्थानात् दूरीकर्तुं प्रभवेत् शक्नुयाद्वा किञ्चिन्मात्रमपि चालयितुं? भव्यस्यापि च तन्नि-राकरणप्रयासः पंगो र्नृत्य मिव परिषदुपहास्यायैव स्यात्। एवं सति यद्यप्यद्वैतवादनिराकरणतत्परे न्यायरत्नमहा-शयेऽस्मन्मौनमेवोचितं, यद्यपि च उपलेषु प्रयुक्तक्षुरतैक्ष्ण्यवत्

स्वयमेव विनङ्क्ष्यन्ति निराचिकीर्षोर्वचांसि तथापि मन्दमतीन् प्रति एष नो यत्नः। मन्दमतयो हि विचारणदीनाः साध्वीमसाध्वीं वा यां काञ्चिदेवोक्तिं श्रुत्वैव भ्रान्ताः सन्तः आचारानपि स्वान् जहतीति दृष्टमस्माभिः, विषयाहितचित्ताश्च केचिन्मंस्यन्ते तत् किं भगवान्नाचार्य्यः वेदानां स्वकल्पितव्याख्ययास्मान्न प्रतारितवानिति। ते विपरीतबुद्ध्या नानर्थं प्राप्नुयुरिति तेषामेव बोधार्थमिदमारभ्यते।

विचित्रं खल्विदं यन्न्यायरत्नमहाशयेन पुस्तकस्यास्याद्वैतवादखण्डनमिति नाम कृतमिति। महता परिकरेण योऽसावद्वैतवादः खलु प्रसाधित स्तत्रभवताचार्य्येण, तस्य किं च्छान्दोग्योपनिषदः द्वित्राणां श्रुतीनां श्रीमद्भगवद्गीताया वा कतिपय श्लोकानामपव्याख्यानेन खण्डनं भवति? बह्व्यो हि बृहदारण्यकेशकेनकठवल्ल्याद्युपनिषदः सन्त्यद्वैतवादतत्पराः, बहूनि च पुराणानि, बहवश्चेतिहासादयो वर्त्तन्ते ब्रह्मवादपराः, तेषां प्रत्येकमविचार्य्य "खण्डनं" नामापि तस्यासिद्धमेव। आचार्य्येण तु अद्वैतवादं प्रतिपादयता सर्व्वासामुपनिषदां सर्व्वेषां पुराणानामितिहासादीनाञ्च सम्यग्व्याख्यानेनाद्वितीये ब्रह्मण्येव तात्पर्य्यं प्रदर्शितम्। विचारितानि च यथायथं कपिलगोतमकणादमहर्षिप्रभृतीनां वचांसि। निराकृतानि च बौद्धचार्व्वागादि दर्शनानि। अपिच नैयायिकशिरोमणिना न्यायरत्नमहाशयेन योऽयमद्वैतवादो निराकर्त्तुमिष्यते तत्रैव वेदान्तोपदिष्ट आत्मज्ञाने न्यायरत्नमहाशयानामुपजीव्यै-

विख्यात नैयायिकधुरन्धरैः श्रीमदुदयनाचार्य्यैः समधिकः समादरः प्रदर्शितः अग्रयमासनं च दत्त मात्म विवेकग्रन्थे वेदान्ताय। वेदान्तसम्मतं चरममात्मज्ञानमुल्लिख्योक्तं,—"साचात्रस्था न हेया मोक्षनगरगोपुरायमाणत्वादिति,, अस्यार्थः यथा गोपुरेण पुरद्वारेणैव नगरं प्रविशति, पुरद्वारमन्तरेण न कश्चित् नगरं गन्तुमर्हति तथा वेदान्तसम्मतात्मज्ञानमन्तरा न कश्चित् मोक्षं प्राप्नुयात् अतः सा अवस्था न हेया न त्याज्येति अवस्थापदेनात्मज्ञान मेवेति। तथान्यत्रापि शून्यवादिनां बौद्धानां मतानि निराचिकीर्षया विवर्त्तवादमवताय्योक्तं;—"तदास्तां तावत् किमाद्रकवणिजां बहित्रचिन्तयेति" अस्यार्थः तिष्ठतु तावत् विवर्त्तवादः परमसूक्ष्मबुद्धिग्राह्य आद्रकवणिजां अस्माकं वहित्रचिन्तया पोतचिन्तया किं अलमित्यर्थः। स्थूलबुद्धीना मस्माकं परमसूक्ष्मबुद्धिग्राह्यस्य विवर्त्तवादस्य चिन्ताया अवसरो नास्त्येवेति। अत्रैव च बौद्धमतपरीक्षा मुपसंहृत्योक्तं बौद्धं प्रति—

"प्रविश वाऽनिर्व्वचनीयख्यातिकुक्षिं तिष्ठ वा मतिकर्द्दममपहाय न्यायनयानुसारेण नीलादीनां पारमार्थिकत्वे,, इति। अस्यार्थः, अनिर्वचनीयख्यातेः कुक्षि मुदरं प्रविश मतिकर्द्दमं बुद्धिदोषं अपहाय परित्यज्य न्यायमतानुसारेण नीलादीनां जगतामित्यर्थः पारमार्थिकत्वे वा तिष्ठेति। वेदान्तिनः किल जगतः अनिर्व्वाच्यतां कथयन्ति, नैयायिकास्तु पारमार्थिकत्व मेव। तेन जगतोऽनिर्व्वाच्यतां वेदान्तीव स्वीकुरु

अथवा नैयायिक इव पारमार्थिकत्वं, एतद्द्वयातिरिक्तं तृतीयं त्वसन्मतमित्यस्य वाक्यस्य निर्गलितोऽर्थः ।

पुनश्चोक्तमनुपद मेव तैर्मनीषिभिः—

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्ति
स्तद्बाधने वलिनि वेदनये जयश्रीः ।
नो चेदनिन्द्यमिदमीदृश मेव विश्वं
तथ्यं तथागतमतस्य तु कोऽवकाशः ॥

अस्यार्थः—ग्राह्यभेदं घटपटादिभेदं अवधूय तिरस्कृत्य धियः बुद्धेः वृत्तिर्नास्ति । ग्राह्यघटपटादिव्यतिरेकेण बुद्धे र्वृत्ति-रेव न सम्भवति । तद्बाधने तस्य ग्राह्यस्य बाधने जयश्रीः जयलक्ष्मीः वलिनि वलवति वेदनये वेदान्तमते तिष्ठतीति शेषः । तथा सति वेदान्तस्यैव जयः स्यात् इति भावः । नो चेत् ग्राह्यावाधने इत्यर्थः इदं दृश्यमानं अनिन्द्यं विश्वं जगत् ईदृश मेव तथ्यं पारमार्थिकमेवेत्यर्थः । ग्राह्यस्य घटादे रवाधने न्यायमतस्यैव जयः स्यात् । जगत् सत्यमिति हि नैयायिका वदन्तीति भावः । तथागतमतस्य बौद्धमतस्य कः अवकाशः ? अत्र बौद्धमतस्यावसरो नास्त्येवेति भावः । अत्र वेदनये इत्यस्य बलिनीति विशेषणेन वेदान्तस्यैव श्रेष्ठता स्वीकृता ।

अपिच, " इदन्तु कण्टकावरणं तत्त्वं हि बादरायणादि"-त्युक्तिरपि कस्यचित् न्यायाचार्य्यस्यैवेति प्रसिद्धिः । इदं

गोतमोक्तं न्यायदर्शनं कण्टकावरणं। हि यतः तत्त्वं यथार्थ मात्मज्ञानं बादरायणात् व्यासात् तदुक्तवेदान्तदर्शनात् ज्ञातव्यमिति भावः। तात्पर्य्यन्त्वस्य वाक्यस्य—वेदान्तदर्शने एव यथार्थ मात्मज्ञानं व्युत्पादितं, गोतमस्य दर्शनन्तु कण्टकावरणमात्रं। यथा शस्यरक्षायै कृषीवलाः शस्यक्षेत्रं कण्टकैरावृतं कुर्व्वन्ति न ह्यावरणं शस्यं पुष्णाति, अपितु शस्यविनाशकगोमहिषादीन् निवारयति। अत्र यद्यपि कण्टकावरणं शस्यवृद्धौ न कारणं किन्तु तथापि रक्षामात्र एव तेषा मुपयोगितावरणस्य तथा गोतमोक्तन्यायदर्शनस्यापि कुतार्किकनिचयानां कुतर्केभ्यो वेदान्तोपदिष्टात्मज्ञानस्य रक्षामात्रे एवोपयोगः। यदि कश्चित् कुतार्किकः कुतर्कै र्वेदान्तसम्मतात्मज्ञानमन्यथाकर्त्तु मुद्गच्छेत् तर्हि स न्यायदर्शनेन पराजीयेत इत्यतः कण्टकावरणेन शस्यामिव न्यायदर्शनेन वेदान्तः परिरक्षितो भवतीति अद्वैतवादे परा भक्तिः प्रदर्शिता।

तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवदिति न्यायदर्शनम् ४।२।५० सूत्रेण च भगवता गोतमेन वादजल्पवितण्डासु कथासु वीजप्ररोहसंरक्षणार्थं कण्टकशाखावरण मिव तत्त्वनिश्चयरक्षैव जल्पवितण्डयोः प्रयोजन मिति सुस्पष्ट माभिहित मिति पूर्व्वोक्तवाक्यमेव समर्थित मिति।

इदमेवाभिप्रेत्य प्राचीनाः खल्वाचार्य्याः ऊचुः;—आसुप्तेरामृतेः कालं नयेद् वेदान्तचिन्तयेति। परमाणुचर्च्चया

दिनं नेतव्य मिति कुत्रापि न केनाप्युक्तम् ।

"एतेन शिष्टापरिग्रहा अपि व्याख्याताः" (वेदान्तदर्शनं २।१।१२) इति सूत्रेण अपरिग्रहाच्चात्यन्तमनपेक्षेति सूत्रेण (२।२ १७) च परमर्षिणा व्यासदेवेनापि परमाणुकारणवादो निन्दितः। एतेन प्रकृतेन प्रधानकारणवादनिराकरणकारणेन शिष्टै र्मनुव्यासप्रभृतिभिः केनाप्यंशेनापरिगृहीता येऽण्वादिकारणवादा स्तेऽपि प्रतिषिद्धतया व्याख्याता निराकृता वेदितव्या इति सूत्रार्थः। शिष्टापरिग्रहा इत्यनेनास्य परमाणुवादस्य निन्दैवाभिहितेति स्पष्टमेव। अपिच पुराणादिष्वपि न्यायादिशास्त्रेभ्योऽद्वैतवादपरस्य वेदान्तशास्त्रस्योत्कर्षतां प्रतिपाद्य वेदान्तस्योपादेयतामाह यथा पाराशरे,—

अक्षपादप्रणीते च काणादे सांख्ययोगयो,
-स्त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्येकशरणै र्नृभिः।
जैमिनीये च वैयासे विरुद्धोंऽशो न कश्चन,
श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि ता विति।

अत्र द्वितीयश्लोकेन वेदार्थाभिज्ञतया पूर्व्वोत्तरमीमांसयोरेव साधु प्रशंसनं दृश्यते, अक्षपादकणादयोस्तु निन्दापीति। महाभारतेऽपि—

अहमासंपण्डितको हैतुको वेदनिन्दकः।
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकां॥



हेतुवादान् प्रवदिता वक्ता संसत्सु हेतुमत् ।
आक्रोष्टा चाभिवक्ता च ब्रह्म वाक्येषु च द्विजान् ॥
नास्तिकः सर्व्वशङ्की च मूर्खःपण्डितमानिकः ।
तस्येयं फलनिर्वृत्तिःशृगालत्वं मम द्विज ॥

महाभारतं शान्तिपर्व १८०।४७—४९ ।

इति तर्कशास्त्रस्य निन्दावगम्यते ।

“ नृणा मेकोगम्य स्त्वमसि पयसा मर्णव इव ” इत्यादि पुष्पदन्तप्रणीत स्तोत्रादिष्वपि सम्यगद्वैतवाद एव परिगृहीतः इत्येवं सर्व्वेषु वेदेषु सर्व्वासु स्मृतिषु सर्व्वेषु चेतिहासेषु अद्वैतस्यैव परं समादरः समुपलभ्यते ।

“ नेह नानास्ति किञ्चन,, “मृत्योः स मृत्यु माप्नोति य इह नानेव पश्यति,, यत्र हि द्वैतमिव भवति तादितर इतरं पश्यति “यत्र त्वस्य सर्व्वमात्मैवाभूत् तत् केन कं पश्येत् केन कं विजानीयात्,, “ विज्ञातार मरे केन विजानीयात् ,, “तमेव विदित्वातिमृत्युमेति नान्यः पन्थाः विद्यतेऽयनाय “आत्मैवेदं सर्व्वं,, “ब्रह्मैवेदं सर्व्वं,, “ब्रह्मविद्ब्रह्मैव भवति,, ‘क्षीयन्ते, चास्य कर्म्माणि तस्मिन् दृष्टे परावरे,, “ तमेव भान्त मनुभाति सर्व्वं तस्य भासा सर्व्वमिदं विभाति,, “ यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्मेति,, “ हन्ताहमिमास्तिस्रः प्रजा जीवेनात्मनानु प्रविश्य नामरूपे व्याकरवाणि,, “यः

सर्व्वज्ञः सर्व्वविद् यस्यज्ञान मयं तपः तस्मादेतद् ब्रह्म नाम-रूपमन्नञ्च जायते,, " स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता नचाधिपः,, " यत्र नान्यत् पश्यति नान्य-च्छृणोति नान्यद् विजानाति स भूमा,, " अथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद् विजानाति तदल्पं, "यो वै भूमा तदमृतं, अथ यदल्पं तन्मर्त्यं,, " सर्व्वाणि रूपाणि विचित्य धीरो नामानि कृत्वातिवदन् यदास्ते,, धीरः परमात्मैव सर्व्वाणि रूपाणि विचित्य स्रष्ट्वा नामानि च कृत्वा बुद्ध्यादौ प्रविश्य जीवसंज्ञो व्यवहरन् यो वर्त्तते सगुण स्तं निर्गुणत्वेन विद्वानप्यमृतो भवति इत्यस्याः श्रुतेरर्थः। एवं " नान्यदतो-ऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ,, " निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं,, "अमृतस्यापरं सेतु दग्धेन्धन मिवानलं,, " नेति नेति,, निष्कलमिति निर्गताः कला अंशा यस्मात्त-न्निष्कलं यतो निष्कल मतो निरंशत्वान्निष्क्रियं, अतः शान्त-मपारिणामि, निरवद्यं रागादिदोषशून्यं, अञ्जनं मूलतमः सम्बन्धो धर्म्मादिकं वा तच्छून्यं निरञ्जनं। किञ्च तस्य मोक्ष-स्य स्वयमेव वाक्योत्थवृत्तिस्थत्वेन परमुत्कृष्टं सेतुं लौकिकसेतु-वत्प्रापकं, यथा दग्धेन्धनोऽनलः शाम्यति तमिवाविद्या तज्जं दग्ध्वा प्रशान्तं निर्गुण मात्मानं विद्यादित्यर्थः। नेति नेतीति स्थूलादि द्वैतशून्यम्। तथा " अस्थूल मनणु मह्रस्व मदीर्घं,, न्यूनमन्यत् स्थानं, सम्पूर्ण मन्यादिति। एवं सर्व्वा एवोपनिषदः अद्वैतवादमेव संस्थापयन्ति। कानिचिच्च वाक्यानि ब्रह्मणो

द्विरूपतां दर्शयन्ति। तत्राविद्यावस्थायां ब्रह्मण उपास्योपासकादिलक्षणः सर्व्वो व्यवहारः। तत्र कानिचिद् ब्रह्मण उपासनान्यभ्युदयार्थानि, कानिचित् क्रममुक्त्यर्थानि कानिचिच्च कर्म्मसमृद्ध्यर्थानि, तेषां गुणविशेषोपाधिभेदेन भेदः। एक एव तु परमात्मेश्वर स्तैस्तैर्गुणविशेषैर्विशिष्ट उपास्यो यद्यपि भवति तथापि यथागुणोपासनमेव फलानि भिद्यन्ते "तं यथा यथोपासते तदेव भवति," "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेत 'प्रेत्य भवति," इत्यादि श्रुतिभ्यः। अनेनैवाभिप्रायेण भगवताप्युक्तं;—

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरं।
तं त मेवैति कौन्तेय! सदा तद्भाव भावित इति॥

तं परमात्मानं यद् गुणत्वेन लोका राजान मिवोपासते तत्तद् गुणवत्त्वमेव तेषां फलं भवति, क्रतुः सङ्कल्पो ध्यानं, इह यादृशध्यानवान भवति मृत्वा तादृशोपास्यरूपो भवतीत्यत्रैव भगवद् वाक्यं। ब्रह्मविद्यैवोपनिषच्छब्दवाच्या तत्पराणां सहेतोः संसारस्यात्यन्तावसादनात् नहि तस्याः प्रामाण्यं केनापि निराकर्त्तुं शक्यते अन्यथयितुं वा स्वकपोलकल्पितव्याख्यया। उपनिषदितिशब्दस्यार्थेनैव तथात्वमवगम्यते। कथं? षद्ऌ विशरणगत्यवसानेषु इति स्मृतेः। सदे र्धातो रुपनिपूर्वस्य क्विबन्तस्य सहेतुसंसारनिवर्त्तकब्रह्मविद्यार्थत्वादुपनिषच्छब्दवाच्या सा भवत्युक्तफलवती। उपशब्दो हि सामीप्यमाह तच्चासति संकोचके प्रतीचि पर्य्यवस्यति। निशब्दश्च

निश्चयार्थकस्तस्मादैकात्म्यं निश्चितं तद्विद्या सहेतुं संसारं साद-यतीत्युपनिषदुच्यते। तादर्थ्याद् ग्रन्थोप्युपनिषत् कथ्यते। सदानन्दयोगीन्द्रोप्युपनिषत्प्रमाणकत्वेन वेदान्तस्य लक्षण-माह:—यथा "वेदान्तो नाम उपनिषत् प्रमाणं तदुपकारीणि शारीरकसूत्रादीनीति।,, (वेदान्तसारः ६ पृ)। तट्टीकाकृन्नृ-सिंहसरस्वती स्यैवं व्याख्यातवान्;—उपनिषद एव प्रमाणं उपनिषत् प्रमाणं, उपनिषदो यत्र प्रमाण मिति वा। तदु-पकारीणि वेदान्तवाक्यसंग्राहकाणि शारीरकसूत्रादीनि, "अथातो ब्रह्मजिज्ञासा,, इत्यादीनि। आदिपदेन भगवद्गी-ताद्यध्यात्मशास्त्राणीति। एतन्मते मुख्यगौणभेदेन वेदान्त-शब्दस्य द्विविधोऽर्थः। मुख्यार्थस्तु वेदान्तस्योपनिषदेव। संग्राहकशारीरकसूत्रादीनि च गौणार्थः। आपस्तम्बेनोक्तं मन्त्रब्राह्मणयो र्वेदनामधेय मिति। द्वौ खलु भागौ वेदस्य एको मन्त्ररूपः, अपरो ब्राह्मणः। काश्चिदुपनिषदो मन्त्रभाग-स्यान्तर्निविष्टाः काश्चिच्च ब्राह्मणभागस्य ईशावास्य श्वेताश्वत-राद्या मन्त्रभागस्य, च्छान्दोग्यबृहदारण्यकाद्याश्च ब्राह्मण-भागस्य। माध्यन्दिन्याः संहितायाः श्वेताश्वतरसंहितायाश्च शिष्टावंशावेव क्रमादीशावास्योपनिषत् श्वेताश्वतरोपनिष-दित्याख्ययाख्यातौ। इत्येवं सर्व्वासामेवोपनिषदां वेदस्यैवा-वसानवाच्यत्वं। तेन तासां सुतरां प्रामाण्यं तन्मूलकतया तत् संग्राहकतया च श्रीमद्भगवद्गीतायाः प्रामाण्यं मत उपनिषद्-भ्योपि गीतायाः प्रबलं प्रामाण्य मित्युक्तिः कस्याचिद् वृथैवेति।

सर्व्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्
इत्यादि वचनमपि ।

गीताया उपनिषन्मूलकत्व मेव ब्रूते इति सुधिय एव प्रमाणं । तथा

तात चिन्मात्ररूपोऽसि न ते भिन्नमिदं जगत् ।
अतः कस्य कथं कुत्र हेयोपादेय कल्पना ॥
आब्रह्मस्तम्ब पर्य्यन्त महमेवेति निश्चयी ।
निर्व्विकल्पः शुचिः शान्तः प्राप्ताप्राप्तविनिर्वृतः ॥
नानाश्चर्य्य मिदं विश्वं न किञ्चिदिति निश्चयी ।
निर्वासनः स्फूर्त्तिमात्रो न किञ्चिदिव शाम्यति ॥
एक एव हि भूतात्मा भूतभूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥
नित्यः सर्व्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ।
एकः स भिद्यते शक्त्या मायया न स्वभावतः ॥
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥
तच्छरीर समुत्पन्नैः कार्य्यै स्तैः करणैः सह ।
क्षेत्रज्ञाः समजायन्त गात्रेभ्य स्तस्य धीमतः ॥
सर्व्वभूतस्थमात्मानं सर्व्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्व्वत्र समदर्शनः ॥
यो मां पश्यति सर्व्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥

मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।
मयि सर्व्वमिदं प्रोतं सूत्रे मणिगणा इव ॥
वीजं मां सर्व्वभूतानां विद्धि पार्थ सनातनम् ।

इत्याद्याः स्मृतयोऽपि समर्थयन्त्यद्वैतवादं । अन्याश्च स्मृतयोऽद्वैतवादिन्यो बह्व्यः सन्ति विस्तरभयान्नेहोच्यन्ते । टीकाकृन्मथुरानाथ जगदीशादयो व्याप्तिचिन्ताकुलितमानसाः स्थूलघटपटादिष्वेव मतिमादधाना आसन् कुतस्तेषां योगिगम्याद्वैतवादविचारावसरः ? किञ्च, अवितथमेवाह परमभक्तो गन्धर्वराजः पुष्पदन्तः—

त्वमर्क स्त्वं सोम स्त्वमसि पवनस्त्वं हुतवह,
स्त्वमापस्त्वं व्योमत्वमु धरणिरात्मा त्वमिति च ।
परिच्छिन्नामेवं त्वयि परिणता विभ्रति गिरं
न विद्मस्तत्तत्त्वं वयमिह हि यत्त्वं न भवसीति ॥

सर्व्वथा श्रुतिमूलिकैवेयमुक्तिः पुष्पदन्तस्य,परमेश्वरस्य विराड् रूपं श्रुत्यैव चोक्तं । भगवद्गीताऽपि विभूतियोगाध्याये विश्वरूपाध्याये च भगवतः सर्व्वव्यापित्वं सर्व्वमयत्व श्चाभिहितवती। नचाद्वैतवादिनः परमेश्वरादन्यद् ब्रह्मेति वदन्ति । वस्तुतः, अग्निजलादौ च तस्य परमपूरुषस्याविर्भावमनुभूय तदालम्बने भगवन्त माराधयन्त्यार्य्यतनयाः । इमामेवोपासनां ये जड़ोपासनामित्यभिधाय निन्दन्त्यस्मान धिक् तेषामभिज्ञतां ततो-

ऽपि धिक् तेषां मानुष्य मिति सिद्धं अद्वैतवादस्यैव सर्व्वतः प्राधान्य मिति सर्व्वमवदातं ।

अपिच वेदतात्पर्य्यनिर्णयः सहसा श्रुतिमात्रेणैव न भवति । परमतिशयदुर्बोधो हि वेदार्थः । न च तमुपक्रमादि-विचारमन्तरावगन्तुमर्हन्ति सुधियोऽपि, तदुक्तम्—

उपक्रमोपसंहारा वभ्यासाऽपूर्व्वता फलं ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्य्यनिर्णये ॥ इति

तत्र कस्यचिद् ग्रन्थस्य प्रकरणस्य चादावन्ते च य उल्लेखः स क्रमात् उपक्रम उपसंहारश्चेति ख्यातः । अभ्यासः, कस्य-चिद् विषयस्य पुनः पुनरुल्लेखः । अपूर्व्वता, ग्रन्थस्य प्रकरण-स्य वा प्रतिपाद्यविषया अस्मादन्येभ्यः प्रमाणेभ्यो न ज्ञायन्त इति विशेषोक्तिः । फलं, ग्रन्थस्य प्रकरणस्य वा प्रतिपाद्यविषयाणामेकस्य फलं प्रयोजनम्वा निर्दिश्य वचनम् । अर्थवादः, ग्रन्थोक्तस्य विषयस्य प्रशंसनं निन्दनम्वा । उप-पत्तिः, ग्रन्थोक्त विषय सिद्धये तदनुकूलयुक्ति प्रदर्शनं । एवं श्रुति लिङ्गादीनि च तात्पर्य्यार्थकानि वेदस्य । यदुक्तं महा-महोपाध्यायेन लौगाक्षिभास्करेण तदीयमीमांसा प्रकरणे अर्थ-संग्रहे;—"एतस्य विधेः सहकारिभूतानि षट् प्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि । एतत्-सहकृतेनानेनाङ्गत्वं परोद्देशप्रवृत्तकृतिसाध्यत्वरूपं पारार्थ्या-परपर्य्यायं ज्ञाप्यत इति ।" एतस्य विनियोगविधेः,

सहकारित्वश्चात्र विनियोगविधिविधेयाङ्गभावज्ञापकत्वं, एतत्-सहकृतेन श्रुत्याद्यन्यतमप्रमाणसहकृतेन, अनेन विनियोगविधिना पारार्थ्यापरपर्य्यायं अङ्गत्वं ज्ञाप्यत इति योजना। तस्य चाङ्गत्वस्य स्वरूपमाह परोद्देशेति। परपदेनात्र उत्पत्तिविधिप्रयुक्तानुष्ठानं दर्शपूर्णमासादिरूपं प्रधानं कर्मोच्यते तदुद्देशेन प्रवृत्तस्य पुरुषस्य कामनावतः प्रयाजादिष्वङ्गेषु भवति कृतिसाध्यत्वं गुणविधिप्रयोज्यमित्यर्थसंग्रहोक्तवाक्यस्य टीकाकृत् सम्मतो निर्गलितोऽर्थः।

तत्र निरपेक्षो रवः श्रुतिः। सा च त्रिविधा विधात्री अभिधात्री विनियोक्त्री च, आद्या लिङाद्यात्मिका, द्वितीया व्रीह्यादिश्रुतिः। यस्य च शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते सा विनियोक्त्री। साऽपि विनियोक्त्री श्रुतिः विभक्तिरूपा एकाभिधानरूपा एकपदरूपा चेति त्रिधा।

तत्र विभक्तिश्रुत्या अङ्गत्वं यथा व्रीहिभिर्यजेतेत्यत्र तृतीया श्रुत्या व्रीहीणां यागाङ्गत्वं तदपि पुरोडाशप्रकृतितया। पशुना यजेतेत्यत्र एकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकाङ्गत्वं। यजेतेत्याख्याताभिहितसंख्याया आर्थभावनाङ्गत्व मेकाभिधान श्रुतेः,एकपदश्रुत्या च यागाङ्गत्वं। अयमस्य भावः,पशुनायजेतेत्यत्रैकपदश्रुत्या एकत्वपुंस्त्वयोः पशुरूप द्रव्यं प्रति गुणभावो बोध्यते, एकाभिधान श्रुत्या च तयोरेव कारकाङ्गत्वं बोध्यते इत्येक मेव पशुना यजेतेति वाक्यं एकाभिधानरूपाया एकपदरूपायाश्च विनियोक्त्र्याः श्रुतेरुदाहरणं। श्रुतिश्च लिङ्ग-

वाक्यादिभ्यः प्रवला। शब्दसामर्थ्यं लिङ्गं। यच्चाहुः सामर्थ्यं सर्व्वं शब्दानां लिङ्ग मित्यभिधीयत इति। सामर्थ्यन्तु रूढ़िरेव लिङ्गमिदं वाक्यादिभ्यो वलवत्। समभिव्याहारो वाक्यं, समभिव्याहारश्च साध्यत्वादिवाचकद्वितीयाद्यभावेऽपि शेषशेषिवाचक पदयोः सहोच्चारणं। इदं वाक्यमपि प्रकरणादिभ्यो वलवत्, उभयाकाङ्क्षा प्रकरणं। उभयेति उभयं वाक्यद्वयं तस्य मिथो या आकाङ्क्षा सैव प्रकरणपदवाच्या भवतीत्यर्थः। तच्च प्रकरणं महाप्रकरण मवान्तरप्रकरणश्चेति द्विविधं। मुख्यभावनासम्वन्धि प्रकरणं महाप्रकरणं। अङ्गभावनासम्बन्धि प्रकरण मवान्तरप्रकरणं। तदिदं प्रकरणं क्रियायाः साक्षाद् विनियोजकं। इदमपि स्थानादिभ्यो वलवत्। देशसामान्यं स्थानं। तदपि द्विविधं पाठसादेश्यं, अनुष्ठानसादेश्यं च। पाठसादेश्यमपि द्विविधं यथा सन्निधिपाठः यथासंख्यपाठश्च। तच्च स्थानं समाख्यातः प्रवलं। समाख्या यौगिकशब्दः। साच लौकिकी वैदिकी चेति द्विधा। एषां प्रमाणाना मुदाहरणानि नेहोच्यन्ते विस्तरभयात् सति प्रयोजने आकरेष्वेव द्रष्टव्यानीति। यद्यपि श्रुतिलिङ्गादीनि चोदनातात्पर्य्यार्थकानि तथापि वेदतात्पर्य्यार्थकत्वेनैतेषामुपन्यासः कर्त्तव्य इति तेषामिहो पादानमिति। एभिरेव प्रमाणै र्दुर्वोधोऽपि वेदार्थो निरूप्यते। तत्र अद्वैतवादं दूषयता एतेषां कतमेन प्रमाणेन सदेव सौम्येत्यादि श्रुतीनां तात्पर्य्यं परमाणुषु प्रदर्शित मथवा स्वमतिप्रभवव्याख्ययैवा-

छकृतं श्रुतिवचनमिति विचार्य्य वितन्यते। नहि प्रमाणमन्तरेण कस्यचित् परमगम्भीरे भावयाथार्थ्येऽस्मिन् अद्वैतवादे काचिदुक्तिः साधीयसी भवेत्। न खल्वहमपश्यं स्वर्गस्थं सुरराजं ब्रह्मलोकस्थेति केनचिदुक्तं परमश्रद्धालुरपि विश्वसिति कश्चित् प्रमाणमन्तरेति।

"सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं,, इति छान्दोग्योपनिषद्भागोऽद्वैतवादखण्डने इदमग्रे अर्थात् सृष्टिप्राक्क्षणे सदेव अर्थात् ब्रह्मैवासीत् सच्छब्दोऽत्र ब्रह्मवाचकः "ओं तत्सदिति निर्द्देशो ब्रह्मण स्त्रिविधः स्मृतः,, इति स्मरणात्। ब्रह्मत्वश्च प्रत्यक्षाश्रयत्वं सृष्टिकर्तृत्वादिकश्च तदीक्षता सृजतेत्येव विवृतेः सत्त्वात्, नतु नित्यविज्ञानानन्दस्वरूपत्वमितिव्याख्यातः। भाष्यकारस्तु यद्विज्ञानेन सर्व्वविज्ञानं लभ्यते प्रतिज्ञातं तद्विज्ञानं प्रकटीकर्त्तु प्रथमं सर्व्वस्य सन्मात्रत्वं प्रतिजानन्, सच्छब्दस्य सामान्य विषयत्वं व्युदस्यन्, पृथिव्यादिभ्यस्तस्य विशेषं दर्शयन्, अन्त्यविशेषं व्यावर्त्तयन्, तस्य ताटस्थ्यं निराकुर्व्वन्, प्रत्यगभिन्नस्य तस्य संसारित्वं निवारयन्, निष्क्रियत्वेन च तत् कूटस्थत्व मङ्गीकुर्व्वन्, व्याख्यातवान्। "सदेव सादित्यस्तितामात्रं वस्तु सूक्ष्मं निर्व्विशेषं सर्व्वगतमेकं निरञ्जनं निरवयवं विज्ञानं यदवगम्यते सर्व्ववेदान्तेभ्यः। एव शब्दोऽवधारणार्थः। किं तदवध्रियते इत्याह इदं जगत् नामरूपक्रियावद्विकृतमुपलभ्यते यत तत् सदेवासीदित्यासीच्छब्देन सम्बध्यते। कदा सदेवेदमा-

सीदित्युच्यते अग्रे जगतः प्रागुत्पत्तेः। एकमेवेति, स्वकार्य्य पतितमन्यन्नास्तीत्येक मेवेत्युच्यते। स्वकार्य्येति स्वजातीय स्वगतभेदहीनामित्यर्थः। अद्वितीय मिति, मृद्व्यतिरेकेण मृदो यथाऽन्यद् घटाद्याकारेण परिणमयितृकुलालादिनिमित्तकारणं दृष्टं, तथा सद्व्यतिरेकेण सतः सहकारि कारणं द्वितीयं वस्त्वन्तरं प्राप्तं प्रतिषिध्यतेऽद्वितीयमिति नास्य द्वितीयं वस्त्वन्तरं विद्यते इत्यद्वितीयमिति। विजातीयभेदशून्यमित्यर्थः पर्य्यवसितः। भाष्यकृद् व्याख्यानं तथा ब्रह्मणो नित्यविज्ञानानन्दस्वरूपत्वञ्च दूषयता, प्रत्यक्षाश्रयत्वं स्रष्टिकर्तृत्वादिकञ्च तस्य प्रतिपादयता खण्डनकारेण निरुक्तानामुपक्रमादीनां प्रमाणानां कतमत् प्रमाणमङ्गीकृतमिति संशयो नो जायते हृदि, परं नोपलभ्यते किञ्चित्। विनाप्रमाणं तत्कृतव्याख्यां कथं समीचीनतया गृह्णीमः? कथम्वा लोकोऽपि वेदस्य कल्पितव्याख्या मनुमन्येत? या च श्रुतिरत्रोदाहृता तदैक्षत इति सापि अद्वैतवादिप्रोक्तनित्यविज्ञानानन्दस्वरूपब्रह्मण एव प्रमाणं, तथाहि तैत्तिरीयोपनिषदि ब्रह्मवल्ल्यध्याये प्रथमेऽनुवाकेऽशेषोपद्रववीजस्याज्ञानस्य निवृत्त्यर्थं विधूतसर्व्वोपाधिविशेषात्मदर्शनार्थ माह श्रुतिः "ब्रह्मविदाप्नोतिपर,,मिति। बृहत्तमत्वाद् ब्रह्म, तद्वेत्ति विजानातीति ब्रह्मवित्, आप्नोति परं निरातिशयं तदेव ब्रह्म परं। नह्यन्यस्य विज्ञानादन्यस्य प्राप्तिरिति भावः। श्रुत्यन्तरञ्च स्पष्टमेव ब्रह्मविदो ब्रह्मप्राप्ति मेव दर्शयति "स यो ह वै तत् परमं ब्रह्मवेद

ब्रह्मैव भवतीत्यादि मुण्डकोपनिषत् (३।२ ६) ततः "तदेषाऽभ्युक्ता। सत्यं ज्ञान मनन्तं ब्रह्मे,, ति ब्रह्मणो लक्षण मुक्त्वा "तस्माद्वा एतस्मादात्मन आकाश सम्भूतः, आकाशाद्वायुः, वायोरग्नि,, रित्यादिना यत् पूर्व्वोक्तं सत्यं ज्ञान मनन्तं ब्रह्म तस्मादेवाकाशः सम्भूत इति सृष्टिमाह जगतः। तदनन्तरं चान्नमयं प्राणमयं मनोमयं विज्ञानमयञ्चानुक्रम्याम्नायते "तस्माद्वा एतस्माद् विज्ञानमयादन्योऽन्तर आत्मानन्दमय इति। एव मत्रैव "असन्नेव स भवति असद् ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदु,,रित्यसद् ब्रह्म विजानन्तं निन्दित्वा, प्रशंसन्ती चास्ति ब्रह्मेति विजानन्तं, श्रुतिराह "सोऽकामयत बहुस्यां प्रजायेय। स तपोऽतप्यत स तपस्तप्त्वा इदं सर्व्व मसृजत यदिदं किञ्च। तत् सृष्ट्वा तदेवानुप्राविशदिति,,। " तत् सत्यमाचक्षत " इति च। स आत्मा यस्मादाकाशः सम्भूतः अकामयत कामितवानित्यर्थः, अन्या सुगमा। अत्र पुनःपुनरेवं ब्रह्मणः आनन्दरूपतां वदन्ति श्रुतयः, यथाः "रसो वै सः,, इति, "रसं ह्येवायं लब्ध्वानन्दी भवति,, "को ह्येवान्यात् कः प्राण्यात् " यदेष आकाश आनन्दो नस्यात् ,, " एष ह्येवानन्दयति सैषानन्दस्य मीमांसा भवति,, " एत मानन्दमय मुप संक्रामति,, "आनन्दं ब्रह्मणो विद्वान न बिभेति कुतश्चन,, " आनन्दो ब्रह्मेति व्यजानात् ,, इति। एवं तैत्तिरीयोपनिषद्भ्यो यदवगतं नित्यविज्ञानानन्दस्वरूपं ब्रह्मेति तदेव ब्रह्मेहापि च्छान्दोग्ये सदेव सौम्येद मग्रआ-



सीदित्यादिना निर्दिष्टं । " तद्धैक आहु,, रित्यादिना वैनाशिकपक्षमुपन्यस्य " कुतस्तु खलु सौम्यैवंस्यादिति हो वाच कथमसतः सज्जायेतेति सदेव सौम्येदमग्र आसीदेकमेवाद्वितीय" मित्यादिना च स्वयमेव श्रुतिः प्रतिषिध्य पुनराह "तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत,,इत्यादि । तदैक्षत इति तत् पदेन सदेवेत्यादिना पूर्व्वोक्तं नित्यविज्ञानानन्दस्वरूपं ब्रह्मैव परामृशति श्रुतिः । सच्छब्देन ब्रह्मण एव परामर्शः, तत् सत्यमाचक्षत इति पूर्व्वोदाहृत श्रुतिभ्यः । अत्रापीक्षणकर्त्तृत्वेन सृष्टिकर्त्तृत्वेन च तस्यैव परामर्शो युक्तः ।

नित्यविज्ञानानन्दस्वरूपस्य ब्रह्मणोऽपीक्षणसर्जनकर्त्तृत्वे न विरुद्ध्येते सर्व्वशक्तिमत्त्वात् तस्य । मन्त्राविमौ परमेश्वरस्य शरीराद्यनपेक्षता मनावरणज्ञानताञ्च दर्शयतः ।

न तस्य कार्य्यं करणञ्च विद्यते
न तत् समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्ति र्विविधैव श्रूयते
स्वाभाविकी ज्ञानवल क्रियाचेति ॥
अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं नहि तस्य वेत्ता
तमाहु रग्र्यं पुरुषं महान्त मिति च ॥

तस्य परमेश्वरस्य कार्य्यं शरीरं करण मिन्द्रियं नास्ति। तत्समः

सदृशः अधिको वा तस्माद् काश्चिन्नास्ति। अस्येश्वरस्य शक्तिः माया परा स्वकार्य्यापेक्षयेति शेषः। विविधा नानारूपा विचित्रकार्य्यकारित्वात्। सा त्वैतिह्य मात्रसिद्धा न प्रमाणसिद्धा इत्याह श्रूयते इति। ज्ञानरूपेण बलेन या सृष्टिक्रिया सा स्वाभाविकी अनादिमायात्मकत्वादित्यर्थः। पाणि रहितोऽपि स ईश्वरः ग्रहीता, पादरहितोऽपि जवनः वेगवान् गतिमानिति भावः। तथा अचक्षु र्नयनहीनोऽपि पश्यति, कर्णशून्योऽपि शृणोति। ईश्वरस्य स्वकार्य्ये लौकिकहेत्वपेक्षा नास्तीत्यर्थः। अग्र्यमनादिपुरुष मनन्तं महान्तं विभुमित्यर्थः सुगममन्यत्। अत उपक्रमादिप्रमाणै र्वेदार्थपर्य्यालोचनया ब्रह्मणो विज्ञानानन्दस्वरूपत्वमेव सिध्यति। "आनन्दादयः प्रधानस्य,, वे. द, ३।३। ११ इति सूत्रेण भगवता व्यासदेवेनाप्यानन्दादयः प्रधानस्य ब्रह्मणो धर्म्माः प्रतिपत्तव्याः, कस्मात्? सर्व्वाभेदा द्देव। सर्व्वत्र हि तदेवैकं प्रधानं विशेष्यं ब्रह्म न भिद्यत इत्यवधृतं। यदुक्तं "ज्ञोऽत एवं,,मिति सूत्रेण ब्रह्मणो ज्ञानाश्रयतायाएव प्रतिपादितत्वात् प्रत्यक्षाश्रयत्वं सृष्टिकर्त्तृत्वादिकञ्च ब्रह्मत्वामिति तत् प्रत्युच्यते नानेन सूत्रेण ब्रह्मणः प्रत्यक्षाश्रयत्वं सृष्टिकर्त्तृत्वादिकम्वा ज्ञाप्यते कथं? अत इति पञ्चम्यास्तसिल् अस्मादित्यर्थः अस्मादेव ज्ञ इति सूत्रार्थः। अत्रात इति पदं किञ्चित् कस्मादित्याद्याकाङ्क्षति तस्या आकाङ्क्षायाः पूर्व्वपूर्व्वसूत्रेणैव परिपूरणं। पूर्व्वं सूत्रे तावत् आत्मन उत्पत्तिविचारः कृतः। "नात्माऽश्रुते र्नित्यत्वाच्च ताभ्यः, इति पूर्व्व



सूत्रं । (वेदान्तदर्शनं २।३।१७) अस्यार्थः अस्त्यात्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्म्मफलसम्बन्धी स किं व्योमादिवदुत्पद्यते ब्रह्मणः आहोस्विद् ब्रह्म वदेव नोत्पद्यत इति संशय्योत्तरयाति न आत्मा जीव उत्पद्यते कथं? अश्रुतेः,नह्यस्योत्पत्ति प्रकरणे श्रवणमस्ति भूयःसु प्रदेशेषु । उत्पत्तिरेवत्वस्य न सम्भवति कस्मात् "नित्यत्वाच्च ताभ्यः,,ताभ्यः श्रुतिभ्यः अस्य नित्यत्वं चावगम्यते। च शब्दादजत्वादिभ्यश्चेति भाष्यकृत्सम्मतोऽर्थः । अत्रापि च ज्ञोऽत एवेति अतः पदेन अनुत्पन्नत्वमेवाकाङ्क्ष्यते तेन यत एवात्मानोत्पद्यते अत एव आत्मा ज्ञः नित्यचैतन्यस्वरूपः । परमेव ब्रह्माविकृत मुपाधिसम्पर्काज्जीवभावेनावतिष्ठते । परस्य तु ब्रह्मणः चैतन्यस्वरूपत्वमाम्नातं "सत्यंज्ञान मनन्तं ब्रह्मेत्यादिना । अतो न तार्किकसम्मतः प्रत्यक्षाश्रयत्वं ब्रह्मणः सिध्यति ।

ननु "ज्ञोऽत एवेत्यत्र" नात्माऽश्रुते नित्यत्वाच्च ताभ्यः इत्यत्र वा सूत्राक्षरेण उत्पत्त्यादि स्पष्टं नोक्तं तत्कुत एतत् अत एव यस्मादेव नोत्पद्यत इति नैष दोषः प्रकरणादेवायमर्थो लभ्यते। पादस्यास्यादित आरभ्य सृष्टि क्रम एव विस्तार्य्य उक्तः । तथाहि "न वियदश्रुते,,रिति पादस्य प्रथमं सूत्रं अनेन सूत्रेण न वियदुत्पद्यते कस्मात्? अश्रुतेः, नह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति इति पूर्व्वपक्षीकृत्य "प्रतिज्ञा हानि रित्यादि सूत्रै वियदुत्पत्तिः सिद्धान्तिता । ततः "एतेन मातरिश्वाव्याख्यातः,, इति सूत्रेण वायो रुत्पत्तिः "तेजोऽत-

स्तथाह्य ह,, इत्यनेन तेजसः "आपः,, इत्यनेनापां " पृथिव्यधिकाररूपशब्दान्तरेभ्यः,, इत्यनेन च पृथिव्या उत्पत्ति मुक्त्वा निरूप्य च " विपर्य्ययेण तु क्रमोऽत उपपद्यते चेति ,, सूत्रेणाप्ययक्रमं " अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादितिचेन्नाविशेषादिति,, बुद्धिमनसो रुत्पत्तिप्रलया वुक्तौ। तदनन्तरमेव " नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः,, इत्याह। अतः प्रकरण पर्य्यालोचनया भगवान् भाष्यकारः समीचीनमेव व्याख्यातवान् यस्मादेव नोत्पद्यते अत एव ज्ञः नित्यचैतन्यस्वरूपोऽयमात्मेति । 

यदपि चोक्तं तेन "असद्वा इदमग्र आसीत्ततो वै सदजायत तदात्मानं स्वयमकुरुत,,इति तैत्तिरीयोपनिषद्विरोधापत्तेश्चेति तत् परिह्रियते । एवकारद्वयस्यापि सार्थकता प्रदर्श्यते । अत्रासत् पदेन सत्पदप्रतिपाद्यं यद्ब्रह्म तद्भिन्नं परमाण्वादिकं लभ्यते इति व्याख्यातं तन्न साधु । असत्पदेनात्र व्याकृतनामरूपविशेषविपरीतरूप मविकृतं ब्रह्मैवोच्यते तदात्मानं स्वयमकुरुतेत्युक्तेः सत्त्वात् । नहि परमाणुरन्यो वा सद्भिन्नः कश्चित् स्वयमात्मकरणे प्रभुर्भवति तेषामचेतनत्वात् । अन्ते " तस्मात् सुकृत मुच्यते इति,, स्वयमेव श्रुत्याभिहितत्वाच्च । ब्रह्मैव सुकृतं स्वयंकर्त्रुच्यते । स्वयं कर्त्तृ ब्रह्मेति प्रसिद्धं लोके सर्व्वकारणत्वात् । अपिचात्रैवाह श्रुतिः " यद्वै तत् सुकृतं रसो वै सः रसंह्येवायं लब्ध्वाऽऽनन्दी भवति । कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो





न स्यात् एषह्येवानन्दयतीति,, । तै,२।७।२ यद्वैतत् सुकृतं रसो वै सः रसो नाम तृप्तिहेतु रानन्दकरो मधुराम्लादिः प्रसिद्धो लोके । रसमेवायं लब्ध्वा प्राप्यानन्दी भवति सुखी भवति । न परमाण्वादीनामानन्दहेतुत्वं दृष्टं लोके । वाह्यानन्दसाधनरहिता अप्यनीहा निरेषणा व्राह्मणाः वाह्यरसलाभादिव सानन्दा दृश्यन्ते विद्वांसो नूनं ब्रह्मैव रसस्तेषामित्युपसंहारेण पूर्व्वोक्तासत्पदेनाविकृतं ब्रह्मैवोच्यते न परमाण्वादीति न कश्चिद्विरोधः । अद्वैतवादिनां तादृशार्थकरणे प्रमाणमुपन्यस्तमेव मया तस्य तु कल्पनायां किमपि प्रमाणं नोपलब्धमिति । यश्च असत् पदेन परमाण्वादिकं लभ्यतइत्याख्याय तदात्मानं स्वय मकुरुते त्यंशस्यार्थकरणे गलद्घर्म्मः प्रयासोऽङ्गीकृतः सोऽपि व्यर्थः परमाणुसिद्धौ, तद्वर मद्वैत मेव स्वीकरण मतस्तत् कृत श्चिपिट मित्यादि श्लोकस्तस्मिन्नेवोचितो नाचार्य्ये ।

यत्तु तेन इदमग्रे इत्येकपदत्वं स्वीकृत्य सृष्टिप्राक्क्षणे इति व्याख्यातं तददृष्टचरत्वादश्रुतपूर्व्वत्वाच्च हेयं । एतन्निरूपणप्रस्तावे, एतज्जिज्ञासया, एतदर्थं "एतद्योनीनि भूतानि सर्व्वाणीत्युपधारय, गी. ७।६ इत्याद्येतच्छब्देनैव समासो व्यवह्रियते सर्व्वत्र नेदं शब्देन क्वचिदपि । तादृक् क्लिष्टकल्पनापेक्षया भाष्यकृद्व्याख्यानमेव स्वीकर्तुमुचित मिति युक्तमुत्पश्यामः । नचानुशासनाविरुद्धतया अस्या अग्रे "इदमग्रे,, इत्यपि प्रयोगः साधुरेव स्यादिति वाच्यं अनादृतत्वात् । सत्यप्यनुशासने न तादृक्पदं केनापि मनीषिणाऽऽदृतं व्यवहृतं वा क्वापि । अन्यथा



"भातिपद्मः सरोवरे ,, इत्यादि रपि निर्दोषः स्यात्। न च काव्यादावेव तथात्वं नान्यत्रेति वाच्यं तार्किक महाशयेनाऽपि "अभून्नृपो विबुधसखः परन्तप,, इत्यादि महाकविवाक्यानां प्रमाणत्वेनाङ्गीकृतत्वात्। अस्तु वा च्छान्दोग्यश्रुते रिदमग्र इत्यत्रेदं पदस्य समीपवर्त्तितया यथाकथञ्चिदिदमग्र इत्येक पदत्वकल्पना, पर "मात्मा वा इद मेक एवाग्र आसीत्। नान्यत् किञ्चन मिषत्! स ईक्षत लोकान्नु सृजा,,इत्यैतरेयोपनिषद् भागस्य का गतिः करिष्यते ? इयं हि श्रुति र्मण्डूकानिवोरगराजपत्नी परानत्यर्थं भाययेत् !!

द्विविधसत्यपदार्थसत्त्वे प्रमाणान्तरमपीत्युक्त्वा नैयायिक महाशयेन "ऋतञ्च सत्यञ्चाभिद्धात्तपसोऽध्यजायते,, त्यादिमन्त्रः समुदाहृतः, व्याख्यातश्चायंमन्त्रः ऋतपदं परमाणुतात्पर्य्यकं सत्यपदन्तु ब्रह्मतात्पर्य्यक मतो न किञ्चिदनुपपन्नं केवलब्रह्मणः सत्यत्वे समानार्थकसत्यपदस्य पुनरुक्ततापत्तेः परस्परभेदसूचकचकारद्वयप्रयोगस्याऽसङ्गतत्वापत्तेश्चेति। नैतद् व्याख्यानं समीचीनं,सन्ध्यादिमन्त्रव्याख्याता परमप्रामाणिको गुणाविष्णुः मन्त्रमिममेवं व्याख्यातवान्। तद्यथा;—

"ऋतञ्च सत्यञ्चेति परं ब्रह्म उच्यते तथाच श्रुतिः "ऋतमेकाक्षरं ब्रह्म,, सत्यं ज्ञानमनन्तं ब्रह्मेति,, आसीदित्यध्याहार्य्यं। तेनायमर्थः ऋतञ्च सत्यञ्च परब्रह्ममात्रमासीदेतेन महाप्रलयावस्था प्रतिपादिता, महाप्रलयसमये तु केवलं ब्रह्मैवासीदित्यर्थ,, इति। श्रुति प्रमाणं प्रदर्शयता गुणविष्णुना ऋतसत्य-



शब्दाभ्यां ब्रह्मैवाभिहितं; तार्किक महाशयेन प्रामाणिकगुण विष्णोरपि व्याख्यामवज्ञाय केन प्रमाणेन ऋत पदं परमाणुतात्पर्य्यक मित्युक्तं तत् स एव महाशयो जानाति।

न केवलं गुणविष्णोर्व्याख्यामपितु सायणाचार्य्यस्यापि व्याख्यां लङ्घितवान् खण्डनकारः। सायणाचार्य्यो हि सर्व्वेषां सामादिचतुर्णां वेदानां व्याख्याता ऐतरेयादिब्राह्मणानाञ्च। तदनुग्रहादेवाधुना सर्व्व एवावगच्छति वेदार्थं दुर्व्वोधमपि, अन्यथा तुहिनकरकापातदुर्गमः सुमेरोः शृङ्गसंघ इवाङ्गल-भाषापरिप्लाविते।स्मिन्नार्य्यावर्त्ते नाममात्रशेषतामेवागमिष्यद् वेदराशिर्न लोकलोचनगोचरतामिति को न स्वीकुर्य्यात्?

"ऋतञ्च सत्यञ्चेति मन्त्रो जले निमग्नस्य प्राणायामार्थाघमर्षण सूक्तान्तर्गतः। ऋतं मानसं यथार्थ सङ्कल्पनं। सत्यं वाचिकं यथार्थभाषणं। चकाराभ्यामन्यदपि शास्त्रीयं धर्म्मजातं समुच्चीयते। तत्सर्व्वं अभीद्धात् अभितः प्रकाशमानात् पर-मात्मन उत्पन्नं,, तै. आ. १० इत्यादि व्याख्यातं सायणा-चार्य्येण। तद्यदि ऋतशब्देन परमाणु रुच्यते तदा नित्यस्य तस्योत्पत्तिः कथं सङ्गच्छते? कथं वात्र परमाणोर्गन्ध आघ्रायि विदुषाऽपि तेन?

किञ्च तत्रभवान् प्रष्टव्यः किन्तावदिदं तदुक्तद्वैविध्यमिति परमाणुसत्यता ब्रह्मसत्यताचैकैव। भवन्मते जातिरेवसत्ता तत् कथमस्याः द्वैविध्यं सम्भवति। परस्परभेदसूचकमत्रचका-



रद्वयमित्यपि क आह तदपि स एव महाशयो ऽवगच्छति। सायणाचार्य्यकृत व्याख्ययापि न तदभिप्रायः सिद्धति।

यश्चाद्वैतवादेषु दूषणं प्रतिपिपादयिषता पण्डितप्रवरेण सदेव सौम्येदमग्र आसीदिति च्छान्दोग्योपनिषद्भागस्य 'हे सौम्य! प्रागुत्पत्तेरिदं जगत् सदेवासीदित्यादि प्राक् प्रदर्शिताचार्य्यपादकृतव्याख्यायां सौम्यपदव्यवहितयोः सदेवेत्यशेदंपदयोरासत्तिविरहेण स्वरसवाहियथोक्तशाब्दबोधानिर्व्वाहकत्वरूपदोष उत्प्रेक्षितः सोऽपि न समीचीनतया प्रतिभाति। निरङ्कुशोऽयं वेदराशिः, न स भवदीयामासत्तिं योग्यता म्वापेक्षते। सहस्रशःखल्वेवंविधः प्रयोग उपलभ्यते वेदेषु। यदि व्यवहितपदयोः सर्व्वत्रासत्तिर्न स्यात् तर्हि कथं "तमेव विदित्वातिमृत्युमेतिनान्यः पन्था विद्यते अयनाय" इत्यादि श्रुतौ मृत्युमितिपदव्यवहितयोः अतीति पदैतिपदयोः सम्बन्धः आसत्तिर्व्वा? अतिमृत्युमेति मृत्युमत्येतीर्थस्तु सर्व्वसम्मतः। कथम्वा मन्त्रेषु;—

उदुत्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्य्यं।
आ तत्ते दस्र मन्तुमः पूषन्नवो वृणीमहे। येन पितॄनचोदयः।

ऋ. म. १ सू. ४२

अप त्यं परिपन्थिनं मुषीवाणं हुराश्चितं। दूरमधि स्रुते रज।

म. १ सू ४२

वि सुपर्णो अन्तरिक्षाण्यख्यद् गभीरवेपा असुरः सुनीथः।
केदानीं सूर्य्यः कश्चिकेत कतमां द्यां रश्मिरस्याततान। म. १ सू. ३५

याति देवः प्रवता यात्युद्वता याति शुभ्राभ्यां यजतो हरिभ्यां
आदेवो याति सविता परावतोप विश्वा दुरिता बाधमानः ।

म. १ सू. ३५

आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥

म. १ सू. ३५

उदुत्तमं मुमुग्धि नो विपाशं मध्यमं चृत । अवाधमानि जीवसे ॥

म. १ सू. २५

परा मे यन्ति धीतयो गावो न गव्यूतीरनु । इच्छन्ती रुरुचक्षसं ॥

म. १ सू. २५

विभ्रद् द्रापिं हिरण्ययं वरुणो वस्त निर्णिजं । परिस्पशो निषेदिरे ॥

म. १ सू. २५

स नो विश्वाहा सुक्रतुरादित्यः सुपथा करत् । प्रण आयुंषि तारिषत् ॥

म. १ सू. २५

इत्यादिषु उदादिपदानां वहुपदव्यवाहितवहन्त्यादि पदानामन्योन्यमासत्तिः ? व्यवहितपदाना मासत्तिर्नास्ति चेदेषु शाब्दबोधो न स्यात् । यास्क सायणाचार्य्यादयस्तु सर्व्वानेवर्ग्यजुः सामार्थर्व्ववेदान् सुष्ठु व्याख्यातवन्त स्तेषां व्याख्याश्च सर्व्वैरेवाचार्य्यैः सादरं परिगृहीताः । एषा तु उल्लिखितानां मन्त्राणां व्याख्या;—
उदुत्यमिति । त्यं तं सूर्य्यं देवं केतवो रश्मय उद्वहन्ति । किम्भूतं जातवेदसं तेजोमय मित्यर्थः । किमर्थमुद्वहन्ति ? दृशे दर्शनाय । कस्य ? विश्वाय विश्वस्य । तेजःस्वरूपं सूर्य्यं देवं विश्वप्रकाश



नाय रश्मय उद्वहन्तीतिव्यवहितयोरपि उदिति वहन्तीति च पदयोः सम्बन्धः ।

आतत्त इति । हे मन्तुमः ज्ञानवन् दस्र दर्शनीय पूषन् । ते त्वदीयं तदवः तादृशं रक्षणं आवृणीमहे सर्व्वतः प्रार्थयामहे । येन रक्षणेन पितॄनङ्गिरः प्रभृतीन अचोदयः प्रेरितवानसि तद्रक्षण मिति पूर्व्वेणान्वयः । अत्र बहुव्यवहितयोः आ इति वृणीमहे इति च पदयोः सम्बन्धः ।

अपत्यमिति । त्वं तादृशं पूर्व्वोक्तगुणयुक्तं स्रुते मार्गादधिदूरं अत्यन्त दूरदेशं प्रति अपाज अपगमय । कीदृशं परिपन्थिनं मार्ग प्रतिबन्धकं । मुषीवाणं तस्कररूपं । हुरश्चितं कौटिल्यानां सञ्चेतारं । मुषस्तेये मोषणं मुषिः औणादिको भावे किप्रत्ययः । मुषिंवनति सम्भजत इति मुषीवा वनषण सम्भक्तौ इत्यस्यरूपं । हुर्छा कौटिल्ये सम्पदादि लक्षणो भावे किप् । हुरश्चिनोतीति हुरश्चित् । अत्रापि व्यवहितयोः अपपदाजपदयोः सम्बन्धः ।

वि सुपर्ण इति सुपर्णः शोभन पतनः सूर्य्यस्य रश्मिः अन्तरिक्षाणि अन्तरिक्षोपलक्षितानि लोकत्रय स्थानानि व्यख्यत् विशेषेण ख्यापितवान् प्रकाशितवान् । कीदृशो रश्मिः गभीरवेपाः गम्भीरकम्पनः असुरः सर्व्वेषां प्राणदः । सुनीथः सुनयनः शोभनप्रापणः । तादृशरश्मियुक्तः सूर्य्यः इदानीं रात्रौ क्कुत्र वर्त्तते तदेतद्रहस्य कश्चिकेत को जानाति न कोपीत्यर्थः । अस्य सूर्य्यस्य रश्मिः कतमां द्यां आततान कं द्युलो-



कं रात्रौ व्याप्तवान् एतदपि को जानाति न कोपीत्यर्थः। अत्र व्यवहितयोः विपदाख्यतत्पदयोः सम्बन्धः।

याति देव इति;—देवो दीप्यमानः सविता प्रवता प्रवणवता मार्गेण याति गच्छति तथा उद्वता उत्कृष्टेन ऊर्ध्वदेशयुक्तेन मार्गेण याति। उदयानन्तरं आमध्याह्नं ऊर्ध्वो मार्गः, तत उपरि चासायं प्रवणो मार्ग इति विवेकः। तथा यजतो यष्टव्यः स देवः शुभ्राभ्यां हरिभ्यामश्वाभ्यां याति देवयजन देशे गच्छति। सविता देवो विश्वादुरिता सर्व्वाणि पापानि अप वाधमानो विनाशयन् परावतः दूरदेशात् द्युलोकात् आयाति यागदेशे आगच्छति। अत्रापि व्यवहितयोः अपपदवाधमानपदयोः, आपद याति पदयोश्च सम्बन्धः।

आ कृष्णेनेति;—सविता सूर्य्यः कृष्णेन रजसा कृष्णवर्णेन लोकेन "कृष्णं कृष्यते निकृष्टो वर्णः,, इति निरुक्ते २।२०। "लोकारजांस्युच्यन्ते,, नि. ४।१९ अन्तरिक्षलोको हि सूर्य्यागमनात् पुरा कृष्णवर्णो भवति। तेनान्तरिक्षमार्गेणा वर्त्तमानः पुनः पुनरागच्छन् अमृतं देवं मर्त्यं मनुष्यं च निवेशयन् स्वस्वस्थानेऽवस्थापयन् देवो भुवनानि सर्व्वान् लोकान् पश्यन् प्रकाशयन्नित्यर्थः हिरण्ययेन सुवर्णनिर्मितेन रथेन आयाति अस्मत् समीप मागच्छति। अत्र आपद याति पदयो र्व्यवहितयोरपि सम्बन्धः।

उदुत्तममिति,— नः अस्माकमुत्तमं शिरोगतं पाशं उन्मुमुग्धि उत्कृष्य मोचय। मध्यमं उदरगतं पाशं विचृत वियुज्य



नाशय जीवसे जीवितुं अधमानि मदीयान् पादगतान् पाशान् अवचृत अवकृष्य नाशय। अत्रापि व्यवहितयोः उत्पद मुमुग्धिपदयोः,विपदचृतपदयोः, अवपद चृतपदयोश्च सम्बन्धः।

परेति;— उरुचक्षसं वहुभिर्द्रष्टव्यं वरुणं इच्छन्ती में शुनः शेपस्य धीतयः बुद्धयः परायन्ति पराङ्मुखा निवृत्तिराहिताः गच्छन्ति। तत्र दृष्टान्तः गावो न गावो यथा गव्यूतीरनु गोष्ठानि अनुलक्ष्य गच्छन्ति तद्वत्। अत्रापि व्यवहितयोः परापदयाति पदयोः सम्बन्धः।

विभ्रदिति;—हिरण्ययं सुवर्णमयं द्रापिं कवचं विभ्रत् धारयन् वरुणो निर्णिजं पुष्टं स्वशरीरं वस्त आच्छादयति। स्पशः हिरण्यस्पर्शिनो रश्मयः परिनिषेदिरे सर्व्वतो निषण्णाः। अत्र व्यवहितयोः परिपद निषेदिरेपदयोः सम्बन्धः।

स इति;—सुक्रतुः शोभनप्रज्ञः स आदित्यो वरुणः विश्वाहा सर्व्वेष्वहःसु नः अस्मान् सुपथा शोभनेन मार्गेण सहितान् करत् करोतु। किञ्च नः अस्माकमायूंषि प्रतारिषत् प्रवर्धयतु। अत्रापि प्रपदतारिषत्पदयो र्व्यवहितयोरपि सम्बन्धः। एवं वेदे वहुशो व्यवहितपदयोः सम्बन्धः समुपलभ्यते। एवं गीतायामपि, “ परं भूयः प्रवक्ष्यामि ज्ञानिना ज्ञानमुत्तम,, मित्यादौ परमित्यस्य वहुव्यवहित ज्ञानामिति पदेन सम्वन्धः।

अपिचासत्तिर्नाम बुद्ध्यविच्छेदः। साचेदानीमुच्चरितस्य देवदत्तशब्दस्य दिनान्तरोच्चारितेन गच्छतीति पदेन सङ्गतिं बाधते बुद्धिविच्छेदान्नत्वेकद्व्यादिपदव्यवहितपदेन सङ्गति



मपीति। तथा सति प्रायः सर्व्वत्रैव काव्ये शाब्दबोधो न स्यात्। ईदृश्येवासत्तिः स्वीकृता वेदे न जागदीशी। नाप्युद्देश्यवाचकविधेयवाचकपदयोः क्रमिकत्वनियमस्तथा सति तत्त्वमसीत्यस्य तत् सदृशो भविष्यसीति तत् कृत समाधान विरोधापत्ति र्दुर्वारा। तत्र तन्मते तदिति सादृश्यमेव विधेयं, त्वमिति चोद्देश्यवाचकं, क्रमिकत्वे त्वं तदसीत्येव स्यान्न तत्त्वमसीति।

किञ्च व्यापकधर्म्मावच्छिन्नस्यैवकारार्थेऽन्वयो न भवितु मर्हतीत्युक्तिरपि तस्य न रमणीया। घटो मृदेवासीदित्यादिप्रयोगः सर्व्वलोकसिद्धः। तथा "असन्नेव स भवति, असद्ब्रह्मेति वेदचेत्,,। "सदेवासीज्ज् जगत् सर्व्वं प्राक्सृष्टे रित्यवधारये,, त्यादिश्रुतिस्मृतिष्वपि तथाविधप्रयोगो बहुधा दृश्यते। एषां क उपायः क्रियते ?

यश्च कश्चिन्निपुणतरो भट्टिनैषधचरितशिशुपालवधकिरातार्जुनीयकाव्याना" मभून्नृपो विबुधसखः,, "स राशिरासीन्महसां महोज्ज्वलः,, "वसन् ददर्शावतरन्त मम्बरात्,, "समाययौ, युधिष्ठिरं द्वैतवने वनेचरः,, इत्यादि श्लोकैकैक पादानुहृत्य "सदेव सोम्येदमग्र आसीदित्यादि श्रुतौ, "आसीदितिलङ्पदेन पूर्व्वकालस्य प्रतिपादिततया "अग्र,, इति शब्दस्य पुनरुक्ति माशङ्क्य, "अग्रे प्रागुत्पत्ते,, रिति भाष्यकृद् व्याख्यानं दूषितवानिति तदपि मन्दं। यतः सत्त्वेऽपि लङ् विभक्तेः कदेत्यादि संशयनिरासायाग्र इत्यादि शब्दस्य



प्रयोगो दृश्यते महाभारतादौ यथा;—

अनाद्यन्तमजं दिव्यमजरं ध्रुवमव्ययं।
अप्रतर्क्यं मविज्ञेयं ब्रह्माग्रे समवर्त्तत॥ इति।

लौकिके काव्ये नास्तीति न काचिदनुपपत्तिर्वेदस्य स्वतः प्रमाणस्य।

अपिचेदमग्रे सृष्टिप्राक्क्षणे इत्यर्थकरणेऽपि कथमग्रशब्दस्य पुनरुक्ति र्निराकृता नैयायिकपुङ्गवेन तन्न वयं जानीमः। कदेत्याशङ्कानिवारणार्थोऽग्रशब्दस्तूभयोरेवावयोः समानः। तत् कथं भाष्य मेव दुष्टं न तदीयव्याख्यान मिति प्रष्टव्यं।

यदपि चाग्रशब्दस्योत्पत्तेः प्रागित्यर्थे स्वीकृते लक्षणा स्वीकार्या स्यादिति "इदमग्र ,, इत्येकपदत्व मङ्गीकृत्याग्रशब्दं प्राक्कालमात्रपरतया, इदमिति च सृष्टिमात्रपरतया व्याख्याय विना लक्षणामुपपत्ति र्दर्शितेति तत्र ब्रूमः अग्रशब्दः प्राक्काल मात्रं बोधयतु, उत्पत्तिरित्यर्थस्तु फलबलादेवागमिष्यतीत्य-स्मन्मतेऽपि लक्षणामन्तरेणाप्युपपत्तिरिति सुधिय एव पश्यन्तु। अपिच वय मिदमिति भिन्न पद एव सुसामञ्जस्यं पश्यामः। तेनेदमितिपदमाभिनय प्रदर्शनार्थं। अभिनयेन दर्शयाति हे सौम्य! इदं सदेवासीदिति। कदा? इत्याशङ्कानिवारणार्थ मग्र इतिपदं। अभिनयस्तु विवक्षितार्थज्ञापकोऽसाधारणो देहतदवयवव्यापार इति। यत्रापिचेदृशोऽर्थो ज्ञाप्यते तत्रेद-मिति भिन्नपदेनैव निर्देशो दृश्यते यथा,—"आसीदिदं तमो



भूत,, मित्यादि। इदमग्र इत्येकपदत्वेऽप्रसिद्धपदत्वमेव स्वीकृतं स्यादित्युक्तमेव।

ब्रह्मणा सार्द्ध भूतादिषु पारमार्थिकतादात्म्ये निरस्तेऽपि न हानि वेंदान्तिनां, यतो न वयं वेदान्तिनः क्कुत्रापि भूतादिषु ब्रह्मणः पारमार्थिक तादात्म्यं प्रसाधयामः। यदुक्तं वाचस्पति मिश्रेण न खल्वनन्यत्वमित्यभेदं ब्रूमः किन्तु भेदं व्यासेधाम इति भामती २।१।१४।

"तेजः परस्यां देवतायां,, स य एषोऽणिमा ऐतदात्म्य,, मित्यादि द्वे श्रुती। तद्यथा,—"तस्य क्व मूलं स्यादन्यत्राद्भ्योऽद्भिः सौम्य शुङ्गेन तेजोमूलमन्विच्छ, तेजसा सौम्य शुङ्गेन सन्मूल मन्विच्छ, सन्मूलाः सौम्येमाः सर्व्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा यथा नु खलु सौम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यस्य सौम्य पुरुषस्य प्रयतो वाङ्‌ मनसि सम्पद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवताया,, मिति। च्छान्दोग्योपनिषत् ६।८।६

"स य एषोऽणिमैतदात्म्यमिदंसर्व्वं तत्सत्यं स आत्मा तत्त्वमसिश्वेतकेतो इति भूय एव मा भगवान् विज्ञापयतु इति तथासौम्येति होवाच,,इति च।६।८।७

सुमनोमनोविनोदाय परीक्षणाय च नैयायिककृतव्याख्यानस्य श्रुतिद्वयस्यास्याचार्य्यपादोक्तभाष्यमपि भाष्यते। यथा;-सामर्थ्यात्तेजसोऽप्येतदेव शरीराख्यं शुङ्गं। अतोऽप



शुङ्गेन देहेनापो मूलं गम्यते। अद्भिः शुङ्गेन तेजोमूलं गम्यते। तेजसा शुङ्गेन सन्मूलं गम्यते पूर्ववत्। एवं हि तेजोऽवन्नमयस्य देहशुङ्गस्य वाचारम्भणमात्रस्यान्नादि परम्परया परमार्थसत्यं सन्मूलमभयमसंत्रासं निरायासं सन्मूल मन्विच्छेति पुत्रं गमयित्वाऽशिशिषति पिपासतीति नाम प्रसिद्धिद्वारेण यदन्यदिहास्मिन् प्रकरणे तेजोऽवन्नानां पुरुषेणोपयुज्यमानानां कार्य्यकरणसंघातस्य देहशुङ्गस्य स्वजात्यसाङ्कर्य्येणोपचयकरत्वं वक्तव्यं प्राप्तं तदिहोक्तमेव द्रष्टव्यमिति पूर्वोक्तं व्यपदिशति। यथा नु खलु येन प्रकारेणेमास्तिस्रो देवतास्तेजोवन्नाख्याः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यन्नमशितं त्रेधा विधीयत इत्यादि। तत्रैवोक्तमन्नादीनामाशितानां ये मध्यमा धातवस्ते साप्तधातुकं शरीरमुपचिन्वन्तीत्युक्तं। मांसं भवति, लोहितं भवति, मज्जा भवति, अस्थि भवति, येत्वणिष्ठा धातवो मनः प्राणं वाचं देहस्यान्तःकरणसंघात मुपाचिन्वन्तीतिचोक्तं तन्मनो भवति स प्राणो भवति सा वाग् भवतीति। सोऽयं प्राणकरणसंघातो देहे विशीर्णे, देहान्तरं जीवाधिष्ठितो येन क्रमेण पूर्व्वदेहात् प्रच्युतो गच्छति तदाहास्य हे सौम्य पुरुषस्य प्रयतो म्रियमाणस्य वाङ् मनसि सम्पद्यते मनस्युपसंह्रियते। अथ तदाहुर्ज्ञातयो न वदतीति। मनःपूर्वको हि वाग् व्यापारः। "यद्वै मनसाध्यायति तद्वाचा वदतीति,, श्रुतेः। वाच्युपसंहृतायां मनसि, मनो मनन व्यापारेण केवलेन वर्त्तते। मनोऽपि यदोपसंह्रियते तदा मनः प्राणे



सम्पन्नं भवति सुषुप्तकाल इव, तदा पार्श्वस्था ज्ञातयो न विजानातीत्याहुः प्राणश्च तदोर्द्ध्वोच्छ्वासी स्वात्मन्युपसंहृतवाह्यकरणः संवर्गविद्यायां दर्शनात् हस्तपादादीन् विक्षिपन्मर्मस्थानानि निकृन्तन्निवोत्सर्जनक्रमेणोपसंहृत स्तेजसि सम्पद्यते तदाहु र्ज्ञातयो न चलतीति । मृतो नेति वा विचिकित्सन्तो देह मालभमाना उष्णश्चोपलभमाना देह उष्णो जीवतीति यदा तदप्यौष्ण्यलिङ्गं तेज उपसंह्रियते तदा तत्तेजः परस्यां देवतायां प्रशाम्यति । तदेवं क्रमेणोपसंहृते स्वमूलं प्राप्ते च मनसि तत्स्थो जीवोऽपि सुषुप्तकालवन्निमित्तोपसंहारादुप संह्रियमाणः सन् सत्याभिसन्धिपूर्व्वकं चेदुपसंह्रियते सदेव सम्पद्यते न पुन र्देहान्तराय सुषुप्तादिवोत्तिष्ठति । यथा लोके सभये देशे वर्त्तमानः कथञ्चिदिवाभयं देशं प्राप्त स्तद्वत् । इतरस्त्वनात्मज्ञ स्तस्मादेव मूलात् सुषुप्तादिवोत्थाय मृत्वा पुन र्देह जाल माविशति यस्मान्मूलादुत्थाय देहमाविशति जीवः ॥ भा.

"तस्य क्व मूलं स्या,,दित्येवम्विधैवान्याश्रुतिः पूर्व्वगताऽस्मिन्नेव प्रपाठके । तत्र, यद्येवं शरीरमिदं समूलं वटादिशुङ्गवत् तस्यास्य शरीरस्य क्व मूलं स्यादिति पुत्रेण श्वेतकतुना पृष्टः पिताऽऽह "तस्य क्व मूलं स्यादन्यत्रान्नादिति,, अन्नं मूलमित्यभिप्रायः । ततोऽप्शुङ्गद्वारेण सतोमूल मनुगमयन् तेजः शुङ्गद्वाराप्यस्ति सतो मूलस्य प्रतिपत्तिरित्याह पुनरपि तस्य क्वमूल मिति । अतो भाष्यकारो भगवानाह सामर्थ्यात्तेजसोऽप्येतदेव शरीराख्यं शुङ्गं । सामर्थ्यात् त्रिवृत्करणवशादिति



यावत् । शुङ्गं कार्य्यमित्यर्थः । पूर्ववदिति यथा पूर्व्वमन्न शुङ्गेन देहेनान्नाख्यं मूलं गम्यते इत्यादि व्याख्यातं तथा तेजः शुङ्गेन देहेन तेजोमूलं गम्यत इत्यादि व्याख्येयं ।

स य इति;— स यः सदाख्य एष उक्तोऽणिमाऽणुभावो जगतो मूलं ऐतदात्म्यं । एतत् सत् आत्मा यस्य सर्व्वस्य तत् एतदात्म तस्य भाव ऐतदात्म्यं । एतेन सदाख्येनात्मनाऽऽत्मवत् सर्व्वमिदं जगत् । नान्योऽस्त्यस्याऽऽत्मा संसारी । "नान्यदतोऽस्तिद्रष्टृ,,इत्यादिश्रुत्यन्तरात् । येन चात्मनात्मवत् सर्व्वमिदं जगत् तदेव सदाख्यं कारणं सत्यं,परमार्थ सत् । अतः स एवात्मा जगतः प्रत्यक्स्वरूपं सतत्त्वं याथात्म्यं । आत्मशब्दस्य निरुपपदस्य प्रत्यगात्मनि गवादिशब्दवन्निरूढ़त्वात् । अत स्तत् सत् त्वमसि हे श्वेतकेतो । इत्येवं प्रत्यायितः पुत्र आह भूय एव मा भगवान् विज्ञापयतु, यद् भवदुक्तं तत् सन्दिग्धं ममाहन्यहनि सर्व्वाः प्रजाः सुषुप्ते सत् सम्पद्यन्त इत्येतद्येन सत्संपद्य न विदुः सम्पन्ना वयमिति । अतो दृष्टान्तेन मां प्रत्याययत्वित्यर्थः । एव मुक्तस्तथाऽस्तु सौम्येति होवाच पितेति ।। भा ॥

केनचिद्विदुषा तु श्रुतिद्वयांश्च श्वरमसमयस्थितद्व्यणुकाद्यात्मक तेजांसि परस्यां देवतायामर्थात् परमाणुषु लीनानि भवेयुः । परस्यां परत्वरूपगुणाश्रयीभूतायामित्यादि व्याख्यातः । निराकृतश्च देवताशब्देन ब्रह्मबोधः एतेन देवताशब्देन ब्रह्मबोधनिरासः कृत इत्यादिग्रन्थेन । नेयं व्याख्या साधीय-



सी निराकरणश्च समीचीनं। परस्यामित्यस्य परत्वरूपगुणा-श्रयीभूताया मित्यर्थः कथमाश्रयणीयः ? किं वृथा बलाद्वाद्वैत वादो दूषणीय इति विपरीतमप्यर्थं प्रकल्प्य दूष्यते ? कथमन्यथा सरलशब्दानां यथाश्रुतार्थं विहायार्थान्तरं कल्प्यते सर्व्वथातिदुर्व्वलोयं पक्षो येन स्वरसवाहिन्यपि श्रुतिवचसां गतिरन्यत्राकृष्टा, सर्व्व एवाकुलकिताश्च मन्त्रो दर्शितश्चात्मनः शास्त्रान्तरेपक्षपातित्वं। किञ्च परत्वं यदि परत्वरूपगुणाश्रयत्वं तर्हि "अन्नदातुः शतगुणोऽभीष्टदेवः परः स्मृतः। गुरुस्त-स्माच्छतगुणो विद्यामन्त्रप्रदायकः " त्वं देवि जननी परा,, इत्यादिष्वभीष्टदेवादेः परत्व किं परत्वरूपगुणाश्रयत्वं ? एवं

"इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मन ।
मनसस्तु पराबुद्धिर्बुद्धेरात्मा महान् परः॥
महतः परमव्यक्त मव्यक्तात् पुरुषः परः।
पुरुषान्नपरं किञ्चित् सा काष्ठा सा परा गतिः,, ॥

कठोपानिषत् १।२

इत्यादावपि किं परत्वं परत्वरूपगुणाश्रयत्वं ? नच तत् सम्भवति। किन्तु पूर्व्वोदाहरणेषु परत्वं श्रेष्ठत्वं सूक्ष्मत्वञ्चेति वाच्यं तद्वदत्रापि परशब्दः सूक्ष्मार्थ मेवाभिधत्ते। अद्वैतवादं दूषयता तेनापि "बुद्धेरात्मा महान् पर,, इत्यादिषु परश-ब्दानां,,श्रेष्ठार्थतैव स्वीकृता। तत् कथमत्र तस्येदृशी कल्पना ? अणोरणीयान् महतो महीयानित्यादि श्रुतेः परमात्मनः सूक्ष्म-त्वादि न विरुध्यते। सर्व्वशक्तिमत्वाच्च तस्य।



"परास्य शक्ति र्विविधैव श्रूयते।
स्वाभाविकी ज्ञान बल क्रिया च॥,,

इत्यादिमन्त्रः परमेश्वरस्य सर्व्वशक्तिमत्त्वे प्रमाणं। भाष्यकारेणापि "इन्द्रियेभ्यः पराह्यर्था,, इत्यादिश्रुतिव्याख्याने परमात्मनः सूक्ष्मत्वमुक्तं "तस्मादव्यक्तात् परः सूक्ष्मतरः सर्व्वकारण कारणत्वात् प्रत्यगात्मत्वाच्च महांश्च,अत एव पूरुषः सर्व्वपूरणात्। ततोऽन्यस्य परस्य प्रसङ्गंनिबारयन्नाह पूरुषान्न परमिति। यस्मान्नास्ति पुरुषाच्चिन्मात्रघनात् परं किञ्चिदपि वस्त्वन्तरं तस्मात् सूक्ष्मत्वमहत्त्वप्रत्यगात्मत्वानां सा काष्ठा निष्ठा पर्य्यवसानं, अत्रहीन्द्रियेभ्य आरभ्य सूक्ष्मत्वादि परिसमाप्तिः। अत एव च गन्तॄणां सर्व्वगतिमतां संसारिणां परा प्रकृष्टागतिः। "यद्गत्वा न निवर्त्तन्त,, इत्यादिस्मृतेरिति,,। कठोपनिषद् भाष्यं १।३।११

अपि च तेजः परस्यामित्यत्र परादेवता परमाणुरिष्यते तार्किकप्रवरेण तेजः शब्देन च द्व्यणुकं। तत्र स प्रष्टव्यः किं भवदीयद्व्यणुकात्मकतेजः परमाणौ लीनं भूयादिति ? श्रुत्यानयात्वप्ययक्रम श्चिन्तितः वाङ्मनसि सम्पद्यते मनः प्राणे, प्राणस्तेजसीति तत उक्तं तेजः परस्यां देवतायामिति। तत्र द्व्यणुके परमाणौ लीने द्व्यणुकरूपपरिमाणाप्तेर्दुर्व्वारत्वाद परमाणुत्वप्रसङ्गः परमाणूनां।

एवं यद्यपि "इमास्तिस्रो देवता,, इत्यादि श्रुति भागस्य



भाष्ये देवतापदस्य "तेजोवन्नाख्यास्तिस्रो देवताः,, इत्यचेतन तेज आदे र्बोधकत्वं दृष्टं तथापि तत्र केवलेन देवतापदेन तथाविधः स्वीक्रियतां नाम किन्त्वत्र परस्यां देवतायामित्युक्तं परा देवता खलु परमेश्वर एव नान्यः। अतः परदेवतापदं न परमाणुं बोधयितु प्रभवेत् नच दृष्टं क्वापि परदेवताशब्दस्या चेतन बोधकत्वं। अन्यथा परस्यामिति विशेषणं निरर्थकं स्यात्।

यदिचापोदेवताः पृथिवी देवताऽग्निर्देवतेत्यादिप्रयोगै रचेतनस्य देवत्वमङ्गीक्रियेत तदा कामं "मृदब्रवीदापोऽब्रुवन्,, इत्यादिप्रयोगै रचेतनस्यापिवदनसम्वदनादि कर्त्तृत्वं स्वीक्रियतां। न ह्यापोदेवता इत्यनेनाचेतनजलादेर्देवत्वं, मृदब्रवीदित्यनेन च मृदो वा वदन कर्त्तृत्व मपितु तदभिमानिन्य श्चेतना एव देवताः। अत एवा "भिमानिव्यपदेशस्तु विशेषानुगातिभ्या,,मिति सूत्रेण वे. द. २।१।५ परमर्षिव्यासदेवेन तत्तदभिमानिनीनां देवतानामेव चेतनत्वमिति प्रयत्नेनावधृतं। पर ब्रह्मणो देवत्वञ्च "एको देवः सर्व्वभूतेषुगूढ़,,इत्यादि श्रुतिशतैः प्रतिपादितं।

यश्च "स य एषोऽणिम,,ति पदेन परमाणुरितिमन्यमानस्य नैयायिक महाशयस्य समजनि महानानन्दकोलाहलः सोऽपि निरानन्दायैव तस्य। तथाह्यत्राणिम पदं मूलं कारणं सदाख्यं ब्रह्मैवाभिधत्ते सर्व्वेषां कार्य्याणामुत्पत्तेः पूर्व्वं तत्र सूक्ष्मरूपेणावस्थानादणिम पदेन तन्निर्देशः। नत्वणिम पदं परमाणुपरं प्रागनुपस्थितत्वात्तस्य। नच परस्यां देवतायामि-



त्यत्रैव परमाणोरुपस्थितत्वमिति वाच्यं पर देवताशब्दस्याचेतनावोधकत्वस्य प्रागेवोक्तत्वात्। उपक्रमोपसंहारयोः परमाणोर्गन्धस्याप्यनुलब्धत्वाच्च। किञ्च स आत्मेतिपदेन स्पष्टमेवाणिम पदं ब्रह्मैव सदाख्यं कथयति।

नैयायिक महाशयः ऐतदात्म्य मित्यत्रैतत् पदेनाणिमैव प्रतिपाद्यते। अतिव्यवहित सत्पदार्थ ब्रह्मवाचित्वे स आत्मेति वाक्ये तत् पदवदत्रापि सर्व्वनाम तत्पद प्रयोगापत्ते रित्यवोचत्, इयमप्युक्तिर्न तस्य युक्तिमती यतः आलङ्कारिक भूषणभूतो विश्वनाथो दोषपरिच्छेदे "आनन्दयति ते नेत्रे योऽसौसुभ्रु समागतः,, इत्यादिषु यत्तदोर्नित्यसम्वन्धः इतिन्यायादुपक्रान्तस्य यच्छब्दस्य निराकाङ्क्षत्व प्रतिपत्तये तच्छब्दसमानार्थतया प्रतिपाद्यमाना इदमेतददः शब्दा विधेया एव भवितुं युक्ताः इत्युक्तवानतः एतच्छब्देन ब्रह्मणः परामर्शेऽपि न क्षतिः। शिशुपालवधादावपिचादः शब्देन परामर्शो दृश्यते यथा—

"जगत्यपर्य्याप्ति सहस्र भानुना
न यन्नियन्तुं समभावि भानुना।
प्रसह्य तेजोभि रसङ्ख्यताङ्गतै
रदस्त्वया नुन्नमनुत्तमं तमः,, ॥ शि. व. १।२७ इति

यश्चैतदात्मजन्यं जगदिति कश्चित् व्याकरोति तन्न समीचीनमित्यादिनाचार्य्यव्याख्यायां पदद्वयस्यैकतरवैयर्थ्यरूपो दोष उत्प्रेक्षितः सोऽपि न मनोरमः "स य एषोऽणिमा,, इत्य-



नेन प्रागात्मनोऽणिमरूपमुक्तं तत एतदात्म्य मित्याह तेनाणिमरूपात्मजन्यं जगदित्यर्थो लभ्तते तत् कुतो वैयर्थ्यं ? एतज्जन्यमात्मजन्यम्वेत्युक्ते किं श्रुतेस्तादृशोऽभिप्रायः स्फूटीभवेत् ? इतिभवानेव हृदयं स्पृष्ट्वा कथयतु ।

जगत् सत्यं मिथ्यावेत्याशङ्का निरासार्थं तत् सत्यमित्युक्तिः सर्व्वथा हेया । तथाहि सदेव सौम्येदमग्र आसीदेकमेवाद्वितीय मित्यादिना पूर्व्वमेवजगतो मिथ्यात्वं प्रतिपादितं । अत्राशङ्कैव नोदेति कुतः पुनस्तन्निराकरण प्रयासः ? येनत्वात्मनाऽऽत्मवत् सर्व्वमिदं जगत्तदेव सदाख्यं कारणं सत्यं परमार्थसत्, अतः स एवात्मा जगतः प्रत्यक्स्वरूपं सतत्त्वं याथात्म्यं । इत्यर्थकरणे न काचिदनुपपत्तिः ।

"मृत्तिकेत्येव सत्यं,, "लोहमित्येवसत्यमित्यादि दृष्टान्तेषु सत्यशब्दान् श्रृण्वन्नेव परमाणूपादानकवस्तुषु सत्यतां पश्यति तार्किक महाशयः किन्त्विदं दर्शनं तस्यापातदृष्टयैवेति मन्ये कथं ? नहि तादृशः पण्डितवरेण्यो दृष्टान्तमप्यवगच्छतीति कः प्रत्येतु ? "यथा सौम्यैकेन मृत्पिण्डेन सर्व्वं मृन्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं,, "यथा सौम्यैकेन लोहमणिना सर्व्वं लोहमयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यं,, छा. ६।१।५ इत्यादि येनाश्रुतं श्रुतं भवत्यमतं मत मविज्ञातं विज्ञात मित्यादेशं पृष्टवानस्याचार्य्यमिति गुरुगृहात् प्रत्यागतः पित्रा पृष्टः श्वेतकेतुस्तदेतदद्भूतं श्रुत्वा विस्मितश्च कथं न्वेतदप्रसिद्ध



मन्यविज्ञानेनान्यद्विज्ञानं भवतीत्येवं मन्वानः हे भगवः कथं केन प्रकारेण स आदेशो भवतीति पितरं पृष्टवान्। तं पृष्टवन्तं पुत्रं श्वेतकतुं प्रति आत्मतत्त्वप्रतिपिपादयिषया दृष्टान्तप्रदर्शनं-यथा स आदेशो भवति तच्छृणु, हे सौम्य ! यथा लोके एकेन मृतपिण्डेन रुचककुम्भादि कारणभूतेन विज्ञातेन सर्व्वमन्यद् विकार जातं मृन्मयं मृद्विकारजातं विज्ञातं स्यात् कारणेनानन्यत्वात् कार्य्यस्य। कारणज्ञानेनैव कार्य्यस्य ज्ञानं भवति। वागालम्बनमात्रं नामैव केवलं न विकारो नाम वस्त्वस्ति परमार्थतो, मृत्तिकैव तु सत्यं वस्तु अस्ति। तथा मूलकारण ब्रह्मातिरिक्तं नास्ति कार्य्यं नाम किञ्चित्, ब्रह्मविहाय न तेषां पारमार्थिकसत्तेतिभावइति। नहि मृत्सुवर्णादीनामपि कार्य्याणा मस्ति पारमार्थिकता "नेह नानास्तिकिञ्चन,, "एकमेवाद्वितीयमित्यादि श्रुतिशतेभ्यः। मृत्सुवर्णादिकारणानि घटकुण्डलादि कार्य्येष्व नुगच्छन्तीति कार्य्यापेक्षया तेषां सत्यतेत्याह मृत्तिकेत्येवसत्यमिति। एवं लोहादिष्वपि व्याख्येयं। नातः परमाणूपादानकवस्तूनां सत्यतेति सुधिय एव पश्यन्तु। किञ्च परमाणूपादानक वस्तूनां सत्यत्वे प्रलयाभावप्रसङ्गः। इष्टापत्तौ सिद्धान्तविरोधः,"यतोवाइमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयत्न्यभिसंविशन्तीति,, "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथेति श्रुतिस्मृतीनामप्रामाण्यञ्च प्रसज्येत।

ननु सत्ता जातिमत्त्वमेव सत्यत्वमिति तत्कुतः प्रलयाभाव इति चेन्न केयं नित्या जातिः श्रीमतां ? न वयं वेदान्तिनो



नित्यां काञ्चिज्जातिं स्वीकुर्म्मः जातित्वपरिभाषायाः सकल प्रमाणागोचरतया अप्रामाणिकत्वात्। यच्च संस्थानव्यङ्गत्वं नित्यत्वे सत्यनेकसमवेतत्वम्वा जातित्वमिति तदपि वैयाकरणानां गुणवृद्ध्यादिवत् सङ्केतविशेषरूपमेव। घटोऽयमित्यादि प्रत्यक्षं तु घटत्वादि सद्भावे मानं न तु तस्य जातित्वेपि। न च जातिर्नित्या अनेकसमवेतत्वादित्यनुमानेन जातिः सेत्स्यतीति वाच्य मितरेतराश्रयत्वात् जातित्वसिद्धौ तत् साध्यकानुमानसिद्धिस्तत् सिद्धौ जातित्वसिद्धिरिति। अनेकसमवेतत्वादिति हेतुरपि च न सिद्धति समवायानङ्गीकारात्। "समवायाभ्युपगमाच्च साम्यादनवस्थिते,, वे. द. २।२।१३ रितिसूत्रेण भगवता व्यासदेवेन महता प्रयत्नेन समवायो निराकृतः, अनवस्थाप्रसङ्गान्नित्यसम्वन्धत्वासम्भवाच्चेति।

नापि सत्यत्वं प्रमाकारत्वमिति, परमाणूनां प्रमाकारत्वाभावेन सत्यत्वाभावात्। नचोर्द्धरेतसां योगिनामस्ति प्रमाऽतीतानागतादिवस्तुष्वितिवाच्य मिष्टापत्तेः, स्वीक्रियतेऽस्माभिर्योगिन स्तपोवलादतीतादि सूक्ष्मवस्तु पश्यन्तीति तर्हि भवताऽपि स्वीकृतमतीतानागतादि वस्तु नचैतद्युक्त मुत्पत्तेः प्राक् कार्य्यस्यासत्त्वेति ब्रुवतो भवतः, तथासति यत्खण्डने श्रीमता प्रयासोऽङ्गीकृतस्तत्सिद्धिः। उत्पत्तेः पूर्व्वं कार्य्यस्य सत्ता स्वीकारे एकमद्वितीयं ब्रह्मैव स्वीकृतं स्यादकामेनापि। अतस्तुच्छ व्यावृत्तरूपमेव सत्यं। तत्तु न सम्भवति परमाण्वादि तेषामपि ब्रह्मापेक्षया तुच्छरूपत्वात् "नेह नानास्ति किञ्चन,,



इत्यादि श्रुतेः। यदुक्तं "नाभावो विद्यते सतः,, इत्यंशेनाद्वैतवादोनिरस्त इति, तत् सर्व्वथायुक्तं। सतश्चात्मनः अभावः अविद्यमानता न विद्यते सर्व्वत्राव्यभिचारादित्यस्यांशस्यार्थः। अयमर्थस्तु सर्व्वैरेव रामानुजस्वामि श्रीधरस्वामिमधुसूदनसरस्वतीप्रभृतिभिर्व्याख्यातृभिरङ्गीकृतः। यथा,-सतश्च आत्मनः अभावोऽविद्यमानता न विद्यते सर्व्वत्राव्यभिचारादित्यवोचाम। गी शा. भा. २।१६.

"असतो देहस्य सद्भावो न विद्यते सतश्चात्मनो नासद्भावः,, इति रामानुजभाष्यं २।१६

"असतोऽनात्मधर्म्मत्वादविद्यमानस्य शीतोष्णादेरात्मनि भावः सत्ता न विद्यते, तथा सतः सत्स्वभावस्यात्मनोऽभावो नाशो न विद्यते,, इति। श्रीधरस्वामिकृतटीका

परं नावगच्छाम्यभिनवभाष्यकारः क तादृशमर्थं लब्धवानिति भाष्यटीकाकृदादीनां व्याख्यां विहाय मोक्षशास्त्रेषु कल्पितार्थं प्रयुञ्जतस्तस्यातिसाहस मेव पश्यामि, अनुभवामि च दुर्व्वलाणुवादरक्षणाग्रहं। "नासतो विद्यते भावः,, इत्यंशस्यार्थप्रदर्शनेनैव शून्याद्घटपटादिरूपो भावपदार्थो न जायत इति शून्यवादिमतनिरासः कृत इति तन्मत मपास्तं।

आत्मपदस्य परमात्मानन्तजीवात्मनां शक्त्या बोधकतया सर्व्वकर्त्तृत्वं जीवे परमात्मनि वा वर्त्तत इति संशयापनोदनार्थं "स आत्मेत्युक्तमिति यन्न्यायविदाभिहितं तदपि न साधु, नह्येतावन्मात्रप्रयोजनमस्य किन्तु श्वेतकेतोरवबोधनाद्यर्थमपि।



तथाहि श्रुतिः " तत्सत्यं,, तत् सदाख्यं कारणं सत्यं परमार्थं सदित्युक्तवती प्राक् । श्वेतकेतोश्च तच्छ्रवणेनेय माशङ्का सम्भवति अस्तु सदाख्यं कारणं सत् तेन किं मे स्यादिति, तदाशङ्का निवृत्तये पिताह " स आत्मा तत्त्वमसीति,, यतः सदाख्यं कारणं सदतः स आत्मा जगतः । हेश्वेतकेतो त्वमपि तदेवासीति ।

" कृत्स्नप्रसक्ति र्निरवयत्वशब्द कोपो वे,,ति व्यासोक्ततर्काभ्यां भूतादिषु ब्रह्मणा सार्द्धं परिमार्थिकतादात्म्यं निरस्त मित्यापि तद्भाषणं न विदुषां सन्तोष मुद्वहति । कृत्स्नप्रसक्ति रित्यादि सूत्रेण ब्रह्मवादमाक्षिपति, नेदं सिद्धान्त सूत्रं । तन्न वेद्मि कथ मस्योल्लेखः कृतो विदुषापि तेन ! यदीदं सिद्धान्तत्वेनापि स्वीक्रियते तदास्य युक्तिमद् व्याख्यानमपि कर्त्तुं समुचितमासीत् तदकरणे कथं सर्व्वेऽवगमिष्यन्त्यस्य तात्पर्य्यं ? यच्च किञ्चिदभिहित मुत्तरग्रन्थे तदपि पूर्व्वापरविरोधप्रसक्त्या हेयमेव । अपिच न केवल मस्य सूत्रस्य व्याख्यानेनापि कृतकृत्यतापितु समग्रवेदान्तदर्शनस्य किञ्चिदन्यदभिनवं भाष्यंविधेयं येन सर्व्वो लोकोऽवगन्तुं प्रभवेत् । सूत्रस्य त्वस्यैवं भाष्यकृत्सम्मता व्याख्या, यथा;—पूर्व्वपूर्व्वग्रन्थेन एकमद्वितीयं चेतनं ब्रह्म जगतः कारणमिति संस्थापित मत्रायमाक्षेपः । एकस्मिन्न द्वितीये निरवयवे ब्रह्मणि जगत् कारणत्वेनाभ्युपगम्यमाने कृत्स्नप्रसक्तिः स्यात् कृत्स्नस्य प्रसक्तिरिति विग्रहः । कृत्स्नस्यास्य ब्रह्मणः कार्य्यरूपेण परिणामः प्राप्नोति निरवयवत्वात्तस्य । पृथिव्यादि हि सावयव

मुपलभ्यते अत स्तस्यैकदेशः परिणमते एकदेशश्चावतिष्ठते इति दृष्टस्तद्वद् ब्रह्मणोऽप्येकदेशस्य परिणामो भवत्वेकदेशश्च तिष्ठतु न चैवं सम्भवति निरवयवन्तु ब्रह्म श्रुतिभ्योऽवगम्यते,

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं।
दिव्यो ह्यमूर्त्तः पुरुषः स वाह्याभ्यन्तरो ह्यजः ॥ इत्याद्याभ्यः

वा चार्थे निरवयवत्वशब्दकोपश्च, अर्थात् पूर्व्वोक्तदोषपरिजिहीर्षया यदि ब्रह्मणः सावयत्व मभ्युपगम्यते तदा निरवयवत्वप्रतिपादकानां शब्दानां कोपो भवितेति सूत्रार्थ उपक्रमोपसंहारप्रकरणादिपर्य्यालोचनया सम्पद्यते। सूत्रेऽस्मिन् भूतादिभिः सार्द्धं ब्रह्मण स्तादात्म्यबोधकशब्दगन्धोऽपि नास्तीति विमलमतिभिरेव विचार्य्यं। अपिचाद्वैतवादिनो जगतो मिथ्यात्वमङ्गीकुर्व्वन्ति न पारमार्थिकतादात्म्यं ब्रह्मण स्तत् तन्मत एवानुक्तोपालम्भः प्रसक्त इत्यपि ध्येयं।

यदुक्तं जीवेषु ब्रह्माभेदो,

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृति रष्टधा॥ गी. ७।४
मयाध्यक्षेण प्रकृतिः सूयते सचराचरं ॥ गी. ९।१०
अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
अव्यक्त निधनान्येव तत्र का परिदेवना ॥ गी. २।२८
प्रकृतिं यान्ति मामिकां,,



इत्याद्युक्तवतो भगवतोऽभिप्राय विरुद्ध इति तदपि नालं सुमनसां चित्तविनोदनाय । भूमिराप इत्यारभ्य भिन्ना प्रकृतिरष्टधेत्यन्तेन श्रोतारं प्ररोचनेनाभिमुखी कृत्यात्मनः सर्व्वात्मकत्वेन परिपूर्णत्वमेवावतारयन्नादावपरां प्रकृतिमुपन्यस्यति । इत्येवमचेतनवर्गमेकीकर्त्तुं प्रकृतेरष्टधा परिणाममभिधायानन्तरमेव, "अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परां । जीवभूतां महावाहो ययेदं धार्य्यते जगदिति,, गी.७।५ विकारावच्छिन्नं कार्य्यकल्पं चेतनवर्गमेकीकर्त्तुं पुरुषस्य चैतन्यस्य विद्याशक्त्यवच्छिन्नस्यापि प्रकृतित्वं कथयितुमुक्तां प्रकृतिमनूद्य दर्शयाति । अष्टधा या प्रकृतिरुक्ता इयमपरा निकृष्टा जडत्वात् परार्थत्वाच्च । इतो यथोक्तायाः अन्यां विशुद्धां मे ममात्मभूतां परां प्रकृष्टां जीवभूतां क्षेत्रज्ञलक्षणां विद्धि जानीहि ययाऽन्तः प्रविष्टया प्रकृत्येदं जगद्धार्य्यते इति विद्वत्सम्मतोऽर्थः । अनन्तरमेवचाह भगवान् " एतद्योनीनि भूतानि सर्व्वाणीत्युपधारये,,ति गी.७।६

एवं, भूतग्राम मिमं विसृजामीत्युक्तो "दासीनवदासीन,, मितिभगवद्वचनं विरुद्धमेव प्रातिभातीति तत् परिहारार्थ माह स्वयमेव भगवान् "मयाध्यक्षेणेति,, । मयासर्व्वतो दृशिमात्र स्वरूपेण तदुक्तं भगवता पतञ्जलिना " द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः,, इति( पा.द.२।२० ) विकारशून्येनाध्यक्षेण ममैव माया सत्त्वरजस्तमोरूपगुणत्रितयात्मिकाऽविद्यालक्षणा प्रकृतिः सचराचरं व्यक्ताव्यक्तात्मकं जगत् सूयते उत

पादयतीत्यर्थः। मन्त्रोऽपि परमेश्वरस्याध्यक्षत्वादि कथयति। यथा;—

"एको देवः सर्व्वभूतेषु गूढः।
सर्व्वव्यापी सर्व्वभूतान्तरात्मा॥
कर्म्माध्यक्षः सर्व्वभूताधिवासः।
साक्षी चेता केवलो निर्गुणश्चेति,,॥

तथा, वस्तूनां स्वभावं पर्य्यालोच्यैव धीमांस्तद्गृह्णाति त्यजति वेति दृष्टं लोके। प्रिये पदार्थ एव ग्रहणाभिलाषोऽप्रिये च त्यागः। भूतानि तु कार्य्यकारणसङ्घातात्मकानीति कुतस्तेषु जिघृक्षाऽतस्तदुद्दिश्य शोको न विधेय इत्यर्ज्जुनं प्रतिबोधयितु माह भगवानव्यक्तादीनीति। अव्यक्तमदर्शनमनुपलब्धिरिति शेषः। आदिः पूर्व्वरूपं येषां भूतानां तान्यव्यक्तादीनि। भूतान्युत्पत्तेः पूर्व्वमव्यक्तादीनि। नहि कार्य्यकारणसङ्घातात्मकानि भूतानि जनैः पूर्व्वमुपलभ्यन्त इति तान्यव्यक्तसंज्ञाभाञ्जि भवन्तीत्यर्थः। उत्पन्नानि च मरणात् प्राक् व्यक्तमध्यानि। व्यक्तमाभिव्यक्तं मध्यं जन्ममरणान्तरालं स्थितिलक्षणं येषां तानि व्यक्तमध्यानि। उत्पत्तेरूर्द्ध्वं मरणाच्च प्राग् व्यावहारिकसत्त्वं मध्यमेषां व्यक्तं। पुनरव्यक्तमदर्शनं निधनं विनाशो येषां तान्यव्यक्तनिधनानि। मरणानन्तरमव्यक्ततामेव प्रतिपद्यन्त इत्यर्थः। तत्र तेषु तथाविधेषु का परिदेवना कः शोक स्तन्निमित्तः प्रलापोवा। प्रतिबुद्धस्य स्वप्नदृष्टपदार्थेष्विव शोको न कार्य्य इत्यर्थः। अयमेव भगवदभिप्रायोऽव-

गम्यते उद्धृतवचनेभ्य स्तत् कुतो भगवदभिप्राय विरुद्ध इत्युक्तं तार्किकपुङ्गवेन तन्न वयमवगच्छामः।

यच्च "ब्रह्मविदाप्नोति पर,,मिति श्रुत्या जीवब्रह्मणो भेदो दृष्टो नैयायिकप्रवरेण तदपि न साधु दर्शनं तस्य। बृहत्तमत्वाद्ब्रह्म तद्वेत्ति विजानातीति ब्रह्मवित्, आप्नोति परं निरतिशयं तदेव ब्रह्म परं। नह्यन्यस्य विज्ञानादन्यस्य प्राप्तिः। इयन्त्वाप्तिः प्राप्तकन्ठस्याभरणवत्। ब्रह्मेदमहमस्मीत्याविद्यातत् संस्कारशून्यत्वेनाखण्डैकरसमात्मानमवगम्य स एव भवतीत्यर्थत्वाच्छ्रुति भागस्यातो नायं श्रुतिभागो जीव ब्रह्मणो भेदं ब्रूते।

किञ्च जीवकैवल्यप्रयोजकतया तत्त्वज्ञानवाराणसीमरणादेः शास्त्रप्राप्तत्वेन तन्मते जीवगताविद्यानाशस्यार्थवञ्च सम्पन्नत्वेऽपि परमाणुत्वनिर्व्वाहिकाणामनाद्यविद्यानां नाशासम्भवेन तासां नित्यत्वापत्ते रित्यादिना यदद्वैतवादिसमाधानं दूषितं तदप्यकिञ्चित्करं। ब्रह्मणि भवदीयपरमाणुत्वव्यवहारः परमाणुत्वनिर्व्वाहिकाविद्या चेति "नवीनमश्रावितवाननादिदं,, न क्वचिदपि तादृशीं श्रुति मुपलभे। "अणोरणीयान्,, एषोऽणिमा,, इत्यादिश्रुतिभ्यो ब्रह्मणः परमाणुत्वव्यवहारो भविष्यतीति चेन्नैताःश्रुतयो ब्रह्मणः परमाणुत्वं वदन्ति "महतोमहीयान्,, "बृहत्वाद् बृंहणत्वात्तु आत्मा ब्रह्मैव गीयत,, इति श्रुति विरोधादपितु सूक्ष्मरूपतामेव। एकयैवाविद्यया सर्व्वव्यवहारोपपत्तावविद्याभेदस्यानङ्गीकृतत्वात् कथं जीवगताविद्यानाशेऽपि परमाणुत्वनिर्व्वाहिकाविद्यायाःस्थितिः



सम्भवेत् ? । यत्तु काशीमरणं कैवल्पप्रयोजकं तदपि तत्त्वज्ञानद्वारैव । मरणकाले परमकारुणिको भगवान् विश्वनाथो दुःखमहार्णवनिमग्नान् जन्तूनुद्दिधीर्षया मुमुर्षोः श्रवणमूले तारकं ब्रह्म श्रावयति । तच्छ्रवणेनाध्यात्मिंसारकाधिभौतिकाधिदैविकदुःखसम्भारसम्भृतस्योद्यदशान्तिसारसंमहासागरप्रवलतरङ्गभङ्गनिमग्नस्याऽपि जन्तोः प्रतिक्षणं जीवितुकामस्य मुहुः प्रचलन्निश्वासमारुतस्य वेपमानहृदयकन्दरस्योत्पद्यते तत्त्वज्ञानं कर्णवत् । यथा कश्चित् श्येनेन ते कर्णो नीत इति केनचिदुक्तः आत्मकर्णमस्पृष्ट्वैव श्येनमनुसरति, तं तादृशं श्येन मनुधावन्तं कश्चित् दयालुराप्तजनः प्रतिवोधयति कथं दूरमनुसरसि श्येनं, यथास्थान मेव वर्त्तते ते कर्ण इति प्रबुद्धः परावर्त्तते अस्ति हि मे कर्ण इति तथाऽविद्याच्छन्नजीवो नित्यवुद्धमुक्त स्वभावोऽपि दुःखितमिव सुखितमिवात्मानं प्रतिपद्यमानो महेश्वरकृपयाविद्यानाशात् स्वरूपमेव प्रतिपद्यते । अत एवोक्तं भगवता पतञ्जलिना "तदाद्रष्टुःस्वरूपेऽवस्थान,, मिति । सांख्यसूत्रमपि "मुक्तिरन्तरायध्वस्तेर्नपरः,, इति ।

नापि, अजामेकां लोहितशुक्लकृष्णां ।
बह्वीःप्रजाःसृजमानां स्वरूपाः ॥
अजो ह्येको जुषमाणोऽनुशेते ।
जहात्येनां भुक्तभोगामजोऽन्यः ॥ इति मन्त्रो गुणत्रयं वोधयितुमीष्टे । लोहितशुक्लकृष्णा मित्यनेन तेजोवन्नलक्षणं



भूतत्रयमेवाचष्टे "यदग्ने रोहितं रूपं तेजस स्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्ये,,ति श्रुतेः (छान्दोग्योपनिषत् ६।४) गुणत्रय कल्पने न किञ्चित् प्रमाणमस्ति। "ज्योतिरुपक्रमातु तथाह्यधीयत एके,, वे.द. १।४।९ इति सूत्रेण भगवता व्यासदेवेनापि मन्त्रस्यास्य तादृशोऽर्थःकृतः। अजामित्यस्य मन्त्रस्या जा का इत्याशङ्क्य सिद्धान्तयति ज्योतिरिति परमेश्वरादुत्पन्ना ज्योतिरुपक्रमा ज्योतिः प्रमुखा तेजोऽबन्नलक्षणा चतुर्विध भूतग्रामस्य प्रकृतिभूतेय मजा प्रतिपत्तव्या। तुशब्दोऽवधारणार्थः। तथाहि एके शाखिन स्तेजोऽबन्नानां परमेश्वरादुत्पत्तिमाम्नाय तेषामेव रोहितादिरूपता मामनन्तीति सूत्रार्थः।

"अणोरणीया नित्यादि श्रुति र्व्याख्याता प्रागेव, सर्व्वशक्तिमत्त्वात् महामायत्वाच्च सूक्ष्मत्वमहत्त्वादि न परमेश्वरस्य विरुद्ध्यते इत्यप्युक्तं प्राक्। इदानीं "मासानां मार्गशीर्षोऽस्मि ऋतूनां कुसुमाकरः,, गी. १०।३५ "द्वन्दः सामासिकस्य च,, गी. १०।३३ इत्यादि भगवद्वचनानि न भाववर्णनपराणीति यदुक्तं तत् प्रति समाधीयते।

सप्तमेऽध्याये भगवतस्तत्त्वं विभूतयश्च प्रकाशिता नवमे च। अथेदानी दशमे येषु येषु भावेषु चिन्त्यो भगवांस्ते भावा वक्तव्याः, तत्त्वञ्च भगवता वक्तव्यमुक्तमपि दुर्विज्ञेयत्वादित्यतो भगवान् स्वयमेवोवाच "भूय एव महाबाहो,, इत्यादि। तत्रात्मनः श्रेष्ठत्वप्रदर्शनाय ध्येयस्वरूपविज्ञापनाय च मार्गशीर्षादीनामुपन्यासः। मासानां द्वादशानां मध्ये पकशस्याग्रत्वात्



शीतातपशून्यत्वाच्च मार्गशीर्षः श्रेष्ठः। ऋतूनां षण्णां मध्ये वसन्तस्यैवोत्कर्षता सुप्रसिद्धैव। "वसन्ते ब्राह्मण मुपनयीत,, "वसन्ते ब्राह्मणोऽग्नीनादधीत,, वसन्ते ज्योतिषा यजेत,, "वसन्तोवै ब्राह्मणस्यर्त्तु रित्यादि शास्त्रमपि वसन्तस्योत्कर्ष तां कथयति। सामासिकस्य समासमूहस्य हरिहरावित्यादि रुभयपदप्रधानत्वेन द्वन्दस्य श्रेष्ठत्वात् सोऽहमस्मीत्युपन्यासः। अन्येषां मासाना मन्येषा मृतूनामितरेषां समासानाञ्चागतिरिति चेत् मास्तु तेषां गतिः कानो हानिः। यदुक्तं "अलङ्कारो ह्ययम-स्माकं यत् सद् ब्रह्मात्मावगतौ सत्यां सर्व्वकर्त्तव्यता हानिः कृतकृत्यता चेति,, भगवानेव सर्व्वश्रेष्ठ स्तदितरेषां पारमार्थि-कदशायां तुच्छत्वादिति। तथाचोक्तं—

"आत्मानं चेद् विजानीयादयमस्मीति पुरुषः।
किमिच्छन् कस्य कामाय शरीर मनुसंसरेदिति,, ॥

"तत्र को मोहः कः शोक एकत्वमनुपश्यतः,, इति च। वस्तु-तस्तु व्यवहारदशायामपि, यथा मासानां मध्ये मार्गशीर्षः, ऋतूनां वसन्तः, समासानां द्वन्दः श्रेष्ठ स्तथाऽहमपि सर्व्वेषां श्रेष्ठः। इत्यत्रैवैषामुपन्यासः। पुष्पाणां गन्धराजोहं लतानां माधवी तथेत्युक्ते कि मन्येषां पुष्पाणा मन्यासाञ्च लतानाम-गतिरेवे त्युक्तं स्या न्नैव मपितु पुष्पान्तरेभ्यो लतान्तरेभ्यश्च तयोः श्रेष्ठत्व मेवं सर्व्वेभ्यो मम परमेश्वरस्यैव श्रेष्ठताऽहमेवो-पास्यो नान्यो मत्तःकश्चिदुपास्य इत्येतद्बोधनायैवाह भगवान् "मासाना,, मित्यादि।



इदमप्यतीव रहस्यं तत्त्वमसीति वाक्यस्य श्वेतकेतो ब्रह्मस्व-रूपताबोधकत्व मद्वैतवादिनः स्वीकुर्वन्तु तावता सकल जीवेषु परमेश्वरस्वरूपतां केनोपायेन तेऽवधारयिष्यन्तीति यदवोच-न्नयायविदामग्रणीस्तदपि न समीचीनं यतस्तत्त्वमसीति महावाक्यं जीवब्रह्माभेदपरं तदित्येकवचनेन ब्रह्मातिरिक्तपदार्थानामवस्तुत्वप्रतिपादनपरश्च । तथाहि सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयमित्युपक्रम्यैतदात्म्यमिदं सर्व्वं स आत्मा तत्त्वमसि श्वेतकेतो,, इत्युपसंहारेणैकमेव सद्वस्तु प्रतिपादयामास "नेहनानास्ति किञ्चन,, "नान्यदतोऽस्तिद्रष्टृ,, "सर्व्वं खल्विदं । ब्रह्मे,,त्यादि प्राक्प्रदर्शित श्रुत्यन्तरेभ्यश्च । "तत्त्वमसिश्वेतकेतो,, इत्यनेन च तस्यैव शुद्धस्य ब्रह्मण ऐक्यं जीवेष्विति दर्शयामास भगवती श्रुतिः स्वयमेवेति स्थूलबुद्धयोऽप्यवगच्छन्ति, परमत्र न जाने कथं व्यामोहो महामहोपाध्यायस्येति । सत्यं, हे देव दत्त । त्वं साधुरसीत्येतावन्मात्रोक्तिं श्रुत्वा न सर्व्वशरीरिणां साधुता निर्णीयते इति किन्तु "ब्रह्मै वेदं सर्व्वं,, "अयमात्मा ब्रह्म,, "नान्योऽस्ति द्रष्टा श्रोता विज्ञाता,, ब्रह्म तु शुद्धं साध्विति श्रवण समनन्तरं हे देवदत्त ! तत्त्वमसि विशुद्धः साधुश्चेति श्रवणेन किं नायाति सर्व्व शरीरिणां साधुता ? किं न प्रतिभाति जीवब्रह्मणोरैक्यं ? तद्भवानेव करौ शिरसि निधाय कथयतु भवन्तं प्रत्येवचास्माक मयं प्रश्नः ।

अपिच नात्राशङ्कनीयं सार्व्वज्ञ्यासार्व्वज्ञ्यादिविशिष्टयोरैक्य मयोग्यपराहतमिति । सोयं देवदत्त इत्यादाविव विरुद्धाकार-



त्यागेन शुद्धयोरैक्य बोधनात्। त्यागश्च विरुद्धाकारस्याविवक्षयैव स च त्यागो ब्रह्मानुभवाविषयत्वं। नत्वपायः। तस्य चरमसाक्षात्कारसाध्यत्वात् तथा च तत्तेदन्ते ऽवानपेते अपि सार्व्वज्ञ्यासार्व्वज्ञ्ये नाश्रयाभेदविरोधाय। अविवक्षाच प्रधान प्रमेय निर्व्वाहाय। न च सोऽयमित्यत्र तत्तेदन्तयो र्नत्यागः क्रमेणैकत्र तयोरविरोधादिति वाच्यं अभेदपरेऽस्मिन् विशेषणयो रैक्यापत्त्या क्रमेणैकत्र सत्त्वेपि तत्त्यागस्यावश्यकत्वात्। "असद्वा इदमग्र आसी"दित्यादौ "सर्व्वं खल्विदं ब्रह्मे" त्यादौच न शून्यजडैक्यापत्तिः। शून्यसतो श्चिज्जडयो र्वाविरुद्धाकारपरित्यागेन जीवब्रह्मणो रिवानुस्यूतस्याकारस्याभावात् असतो निःस्वरूपत्वाज्जडस्य बाध्यस्वरूपत्वात्।

न च तत्त्वमसीत्यत्र त्वं ब्रह्मसदृशो भविष्यसीत्येकपदलक्षणैवालक्षणीयेति युक्तं। अभेदे तात्पर्य्येऽवधृते तन्निर्वाहक लक्षणाबाहुल्यस्यादोषत्वात्। नहि लक्षणैक्यानुरोधेन तात्पर्य्यपरित्यागो विदुषामुचितस्तदुक्तं न्यायचिन्तामणौ "तात्पर्य्यात्तु वृत्ति र्नतु वृत्तेस्तात्पर्य्य,,मिति। जहदजहल्लक्षणया मुख्यपरत्वे सम्भवति सादृश्याद्यर्थ परत्वकल्पनस्यानौचित्याच्चेति सर्व्व मवदातं। प्रतिपक्षाववोधार्थं श्रीमन्मधुसूदन सरस्वतीप्रोक्तं वचन मपीदमत्रोपन्यस्तमिति।

यत्तु निपुण तरेण "तत्त्वमसि श्वेतकेत,, वित्युपनिषद्वाक्यं परम मुक्तितात्पर्य्यक मेव नतु जीवे ब्रह्मस्वरूपतातात्पर्य्यकं तथा सति तिङन्तासि प्रयोगस्यानावश्यकत्वापाता-



दिति प्रोक्तं तदपि समाधीयते। कथमत्रासि प्रयोगस्यानावश्यकत्वं? असीत्यादि प्रयोगाभावेऽस्य वाक्यत्वमपि कथमुपपद्येत? अन्यथा सः, गौः, अश्वः, इत्यादीनां क्रियापदाभावेऽपि वाक्यत्वं स्यात्। अनुमानं निरूप्यत इत्यत्रान्यथानुपपत्त्या समीपभविष्यत्कालतात्पर्य्यकलट्प्रत्ययः स्वीकृतश्चेत् स्वीक्रियतां नाम, अत्र तु तत्त्वमसीति श्रुतेरर्थः शक्त्यैव बोधयितुं शक्यत इति कथं गौण्या अपि लक्षणायाः स्वीकारः? गौण्या लक्षणायाः शक्तितुल्यत्वेऽपि लक्षणैव सा शक्तिभिन्ना च। शक्त्योपपत्तिसम्भवे तदङ्गीकारोऽपि दोषावहः इत्युक्तमेव अन्यथा सर्व्वत्रैव गौण्यैव सादृश्यादि बोधयतु शक्तिस्तु नाम मात्रेणैव तिष्ठतु। अथवात्यन्तमेव प्रलयं यातु।

यच्च तत् पदस्य सादृश्ये, असीत्यस्य च भविष्यसीत्यर्थे, इति लक्षणाद्वयमङ्गीकृत्य तत्त्वमसीति श्रुते स्त्वं तत् सदृशो भविष्यसीत्यर्थापयित्वा "मम साधर्म्म्यमागताः" इति भगवद्गीतावचनं प्रमाणत्वेनोपन्यस्य मम साधर्म्म्यं मत् स्वरूपतामिति भाष्यकृद्भाष्यं दूषित मिति तदपि न सचेतसां सन्तोषलेशमपि जनयाति। तथाहि श्रीभगवान् "परं भूयः प्रवक्ष्यामि ज्ञानिनां ज्ञान मुत्तमं। यज् ज्ञात्वा मुनयः सर्व्वे परां सिद्धिमितोगताः।,,

पूर्व्वेष्वध्यायेषूक्तमपि भूयः पुनरपि परमुत्तमं ज्ञानिनां ज्ञानं प्रवक्ष्यामि। मोक्षहेतुत्वात् ज्ञानस्य परत्वं। यज् ज्ञात्वा मुनयः परां सिद्धिं मोक्षाख्यां, इतोऽस्माद्देहवन्धनादूर्द्धामिति



शेषः गताः प्राप्ताः। इत्यस्य श्लोकस्यार्थः।( इत्यभिधाय पूर्व्वोक्तायाः सिद्धे रैकान्तिकत्वं दर्शयन् ज्ञानकर्म्मणोः फल-वैलक्षण्यमपि चेरयन्, "इदं ज्ञान,,मित्याद्याह। इदं ज्ञानं यथो-क्तमुपाश्रित्य ज्ञानसाधन मनुष्ठाय परमेश्वरस्य मम साधर्म्म्यं मत्स्वरूपता मागताः प्राप्ता इत्यर्थः। अत्र यदि साधर्म्म्यं सादृश्यमित्यर्थोऽङ्गीकृतः स्यात्तदा सादृश्यस्य भेदावश्यम्भा-वाद् विरोधः स्याद् गीताशास्त्रस्य। क्षेत्रज्ञेश्वरयो र्भेदो ना-भ्युपगम्यते गीताशास्त्रेण। अयश्च फलवादो ज्ञानस्तुतये नात्र सादृश्यमभिप्रेतं। सादृश्येऽर्थेऽभ्युपगते ज्ञानफलं त्यक्त्वा ध्या-नफलकथन मप्रस्तुतमेव प्रसज्येत।

श्रीधरस्वामिनापीदं वक्ष्यमाणं ज्ञान मुपाश्रित्य ज्ञानसा-धन मनुष्ठाय मम साधर्म्म्यं मद्रूपत्वं प्राप्ताः सन्तः सर्गेऽपि ब्रह्मादिषूत्पद्यमानेष्वपि नोत्पद्यन्ते, प्रलयेऽपि न व्यथन्ती,, ति व्याख्यातं।

वस्तुतस्तु वयमपि "मत्स्वरूपता,, मित्यर्थ एव साधुत्वं पश्यामः। सादृश्यार्थे बहूनां मुक्तानां जीवानां परमेश्वरसादृ-श्याप्त्या सर्व्वे एवेश्वराः, सर्व्व एव सृष्टिकर्त्तेत्येवं बहूनामी-श्वराणां बहूनां सृष्टिकर्त्तॄणां च सद्भावः स्यात्। एवञ्चेश्वराणां सृष्टिकर्त्तॄणाञ्च परस्परं विरुद्धाभिलाषक्रियतया केवलं सुखि-नो दुःखिनो वा प्राणिन उत्पद्येयुः। सर्गः प्रलयश्च युगपदेव भूयास्तां। कस्तेषां निवारकः स्यात्? इत्येतद्दोष परिजिही-र्षया यद्युच्यते तेषामुत्पत्तिविनाशाभावमात्रं स्यान्न सृष्टि-

 

कर्त्तृत्वादिकं "सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चेत्यु क्तेरिति, तर्हि एतादृशजननमरणरहितक्रियाशून्योदासीनबहु मुक्तजीवापेक्षयैकेश्वरस्वरूपतापत्तिरेव साधीयसी लाघवात्। "एको देवः सर्व्वभूतेषु गूढः। सर्व्वव्यापी सर्व्वभूतान्तरात्मा ॥,, "एष भूतपाल एष भूताधिपति रेष विधारयिता लोकानां,, "नेह नानास्ति किञ्चने,,त्यादि श्रुतिशतेभ्यश्च।

अपिच समान शब्दस्यैकार्थबोधकत्वमप्यस्ति। सगोत्रः सतीर्थः, सोदरः, "सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः,, इत्यादि बहुप्रयोगदर्शनात्।

तदेवं दुर्व्वोधवेदान्तार्थाभिगमे मत्प्रदर्शितप्रमाणानां नैकमपि सहायीकृत्य नैयायिकशिरोमणिनाद्वैतवादिन्यःश्रुतयः समाहिताः। नवा मन्त्राणां यथाश्रुतोऽर्थो रक्षितः। न च स्वीकृता पूर्व्वाचार्य्याणां व्याख्या साधुतयेति सुधिय एव विचारयन्त्वित्यलम्।

इत्थं परोद्भावितदूषणानि यथायथं प्रेक्ष्य समाहितानि।
ये चात्र दोषाः परिलक्षिताः स्यु र्हरन्तु सन्तो निजगौरवैस्तान्॥

व्यावहारिकसत्तायां नानारूपावभासिनः।
चिन्मात्रस्य विचारेण प्रीयतां शङ्करःस्वयं॥
ब्रह्मादि निर्णयास्तस्याद्वैतखण्डनमूलकाः।
निरस्ते द्वैतवैमूल्ये कुतस्तेषां प्ररोहता॥
विद्वांसो मां विजानन्तु सेरपुरप्रवासिनं।
तर्कसिद्धान्तपदभाग्गङ्गाधर शरीरजमितिशं॥

सम्पूर्णोयं ग्रन्थः।

विश्वेश्वर सम्राड् राजेन्द्र हेमन्त विद्वन् महाशयाः
श्रीलाश्री द्वारकानाथेन प्रसीदन्निति दीयते॥१
श्री बाबूराम विज्ञप्ति रेषा सर्वेषां नृपये॥

# शुद्धिपत्रम् ।

| अशुद्धं | शुद्धं | पृं |
|---|---|---|
| गामिन | गामिनी | २ |
| गार्व्वाण | गीर्व्वाण | ३ |
| वौद्धदि | वौद्धादि | ३ |
| अद्वैवाद | अद्वैतवाद | ४ |
| सम्मतः | सम्मतं | २४ |
| मन्त्रो | मन्त्रा | ४० |
| दर्शितश्च | दर्शितञ्च | ” |
| त्मिसारकाधि | त्मिकाधि | ५३ |
| सारसंमहा | सारसंसार | ” |
| कत्तव्यता | कर्त्तव्यता | ५५ |
| दत्त । | दत्त ! | ५६ |
| सौयं | सोयं | ” |



**पुस्तकप्राप्तिस्थानम्—**

श्रीयोगेशचन्द्र चतुर्धुरीणः
८३, खालिशपुरा, वाराणसी,

अथवा

श्रीशशिधर भट्टाचार्य्यः
सेरपुर टाउन, मयमनसिंह ।

